सद्धर्मरक्षक सद्गत–जैनाचार्य श्री १००८ श्रीमद्विजय-कमलसूरीश्वरजीना शासन प्रभावक पट्टधर जैन-रत्न व्याख्यान वाचस्पति आचार्य श्री १००८ श्रीमद्विजय–लब्धिसूरीश्वरजी महाराज



जन्म सं० १९३९, दीक्षा सं० १९५९,
आचार्यपद सं० १९८१ छायापूरी ( गुजरात )

नि. सा प्रेस

!।०७४।

# अर्पणम् ।



વ્યાખ્યાનવાચસ્પતિ
આચાર્યવર્ય
શ્રીવિજયલબ્ધિસૂરીશ્વરના
કરકમલમાં
વિનમ્ર વંદના સહિત
અર્પણ કરી
પ્રમુદિત થઇએ છિયે.

વિક્રમ સં० ૧૯૮૮
મેરુત્રયોદશી
ફેબ્રુઆરી ૧૯૩૨.



જીવનચંદ સાકરચંદ જવેરી
અને
અન્ય માનદ સંચાલકો

THE LATE

# SHETH DEVCHAND LALBHAI JAVERI.

**Born 1853 A D SURAT. Died 13th January 1906 A D, BOMBAY.**



# श्रेष्ठी देवचन्द लालभाई जह्वेरी.

जन्म १९०९ वैक्रमाब्दे कार्तिकशुक्लैकादश्यां,–सूर्यपूरे | निर्याणम् १९६२ वैक्रमाब्दे पौषकृष्णतृतीयायाम्,–मोहमयीनगर्याम्.

नि. सा. प्रेस.

શ્રીપાર્શ્વમ્.

# આમુખ.

—❀—

શેઠ દેવચંદ લાલભાઇ જૈન પુસ્તકોદ્ધાર ગ્રન્થાંકે ૮૦ મા ગ્રન્થાંક તરીકે શ્રીજિનસૂરમુનિરાજકૃત **પ્રિયંકરનૃપકથા,** એની અંતર્કથાઓ, **શ્રીઉપસર્ગહરસ્તોત્ર** અને એની અત્યાર સુધી અપ્રસિદ્ધ યન્ત્રમન્ત્ર ગર્ભિત લઘુ વૃત્તિ, ૨૦ ગાથાના **ઉપસર્ગહરસ્તવન** તેમજ એની **પાદપૂર્તિરૂપ સ્તોત્ર** સહિત પ્રજા સમક્ષ રજુ કરતાં અમોને પરમ આનન્દ થાય છે. આ ગ્રન્થનું કાર્ય પ્રોફેસર **હીરાલાલ રસિકદાસ કાપડિયા** એમ. એ., મારફત કરાવ્યું છે અને તેમણે સંસ્કૃત પ્રસ્તાવના વગેરેથી ગ્રન્થને આદરણીય બનાવવા પૂરતો પ્રયત્ન સેવ્યો છે એટલે તત્સંબંધે અમારે વિશેષ કહેવાપણું રહેતું નથી.

જે જે મુનિરાજો તથા ભંડારની પ્રતો આ પ્રકાશન માટે અમોને મળી હતી તે બદલ તે સર્વેનો અંતઃકરણથી આભાર માનિયે છિયે.

ગ્રન્થ વહેલો તૈયાર થયો હતો પરંતુ સાંગોપાંગ બનાવવાની પૂર્ણ ઇચ્છા હોવાથી એની યન્ત્રમન્ત્રગર્ભિત વૃત્તિની શુદ્ધ તેમજ પ્રાચીન પ્રતિ મેળવવા વગેરે કાર્યમાં ધારવા કરતાં વિશેષ વિલંબ થવાથી ગ્રન્થ બહાર પાડવામાં મોડું થયું હોવાથી વાચકવર્ગ દરગુજર કરશે એવી આશા રાખીએ છિયે.

ગોપીપુરા, સુરત
તા. ૨૯–૩–૩૨.
વ. સં. ૧૯૮૮.

લિ૦
**જીવણચંદ સાકરચંદ જવેરી**
અને
અન્ય ટ્રસ્ટીઓ.

# प्रस्तावना



"स्तवस्तव जिनैकोऽपि, तनोति सुरसम्पदम् ।
पुंसां नाथ! [1]प्रतिक्षिप्ता—तनो! ऽतिसुरसं पदम् ॥ १ ॥
गर्भ-जन्म-व्रत-ज्ञान—श्रेयःकल्याणकेश्वयम् ।
जिनश्चिनोतु भव्यानां, [2]श्रेयः कल्याणकेष्वयम्[3] ॥ २ ॥"

इयं प्रियङ्करनृपकथा सरसा सरला कोमला च कृतिः श्रीजिनसूरमुनीश्वराणामित्यनुमीयते एतत्कथाकारप्रणीतनिम्नलिखितपद्यत्रयपादप्रारम्भिकाक्षरप्रेक्षणात्—

"जिनभक्तः सदा भूयाः, नरेन्द्र! त्वं प्रियङ्कर! ।
शूरेषु प्रथमस्तेन, रक्षणीयाः प्रजाः सुखम् ॥ २२६ ॥"

"जिनप्रणामो जिननाथपूजा, नमस्कृतेः संस्मरणं च दानम् ।
सूरीश्वराणां नतिपर्युपास्ती, रक्षा त्रसाणां दिनकृत्यमेतत् २४५"

"जिणवर देव आराहीइ, नमीहि सहगुरु भत्ति ।
सूधो धम्म ज सेवीइ, रहीइ निरमल चित्ति ॥ २८० ॥"

---

१ निरस्तकाम! । २ द्वितीयैकवचनम् । ३ सानुकूलं दैवम् ।

अथवा स्पष्टोल्लेखे सति किमनुमानेन ? । न च वर्तते निम्न-लिखितं पद्यं—

"विशालराजसूरीश—[1]सुधाभूषणसद्गुरोः ।
शिष्येण [2]जिनसूरेण, सुकृताय कथा कृता ॥ २८६ ॥"

इदमेव पद्यं विद्यते श्रीमन्मथनरेन्द्रसूनुरूपसेनचरित्रस्य प्रान्ते । अतो ज्ञायते चरित्रस्यास्य समानकर्तृत्वम् । पण्डित-हीरालाल हंसराजेतिनामधेयमहाशयैः १९६८तमे वैक्रमीयाब्दे प्रसिद्धिमानायि चरित्रमिदम्, परन्तु तत्रत्यो जिनसूरिरिति निर्देशः स्खलनात्मकः । अपरञ्च कतिपयानां साक्षिरूपपद्यानामपि साम्यं वर्तते ग्रन्थयुगले । यथाहि—

---

१ सुधाभूषणेति नाम सम्भवति, यतः सरस्वतीस्तोत्रसूत्रधाराः श्रीज्ञान-भूषणमुनयः श्राद्धविधिविनिश्चयस्य कर्तारः श्रीहर्षभूषणगणयः; देवपदान्तिकं हरिभूषणेति नाम दिगम्बरसम्प्रदायेऽपि वर्तते । किञ्च प्राकृतगूर्जरभाषानिबद्धं सस्तबकं ७३पत्रात्मकं गौतमकुलकं प्राणायि श्रीसुधाभूषणैरित्यवगम्यते 'लींबडीस्थहस्तलिखित-जैनज्ञानभंडार-सूचीपत्र'स्य द्वितीयपरिशिष्ट( पृ० ४ )-प्रेक्षणात् । परन्तु इमे प्रस्तुता न वेति निर्धारणाय तत्प्रतिप्राप्तिरावश्यकी ।

२ एवं परिस्थित्या सत्यां जैनग्रन्थावल्याः २४८तमपृष्ठगतो जिनसूरीत्युल्लेखो भ्रान्तिमूलकः सिद्ध्यति । किञ्चैभिर्लिखितैका प्रतिर्बालावबोधसमेतगौतमपृच्छेति नाम्नी ३७९/१८७९-८० अङ्करूपा च प्राच्यविद्यासंशोधनमन्दिरेऽस्ति ।

३ प्रारम्भिकपद्यमेवम्—

"श्रीमन्तं विदुरं शान्तं, लक्ष्मीराज्यजयप्रदम् ।
वीरं नत्वाऽद्भुता पुण्य–कथां काञ्चिल्लिखाम्यहम् ॥ १ ॥"

| [1]प्रि. क. प. | [2]रू. च. प. | प्रि. क. प. | रू. च. प. |
|---|---|---|---|
| ३ | ५१ | १६६ | २२८ |
| ११ | १२ | १७५ | १८१ |
| ३० | २२५ | १८१ | २३९ |
| ५६ | ८८ | १९३ | ३४ |
| ६९ | ८४ | १९७ | १९५ |
| ९२ | ३२ | २१७ | ३३ |
| ११५ | ३६ | २१८ | २३५ |
| ११६ | ६० | २२८ | २३६ |
| १२४ | ९१ | २३० | १५ |
| १४२ | १०३ | २३१ | २१० |
| १४९ | ६२ | २३९ | ५८ |
| १६१ | २७ | २४५ | ८७ |
| १६३ | २४४ | | |

**गुरुनामधेयम्—**

विशालराजेति गुरुनामासूचि स्वयं कथाकारैः प्रियङ्कर-नृपकथायाः २७८तमपद्यरचनया, अतः समुपतिष्ठति शङ्का यदुतेमे किं श्रीविशालराजसूरीशानां शिष्याः तच्छात्र-श्रीसुधाभूषणमुनीशां विनेया वा । द्वितीयो विकल्पो स्वीकार्य इति ज्ञायते २८६तमपद्यविलोकनात् । प्रथमे विकल्पे तु सति एतेषां वीतरागस्तोत्रपञ्जिकाकारा गुरुबान्धवाः स्युः, यतो वीतरागस्तोत्रपञ्जिकाप्रान्तेऽयमुल्लेखः—

१ प्रियङ्करकथान्तर्गतपद्यानां वर्णानुक्रमपूर्वकोऽङ्कः। २ रूपसेनचरित्रस्य पद्याङ्कः।

" यस्मात् 'चन्द्र'कुलं सदोदित' तथा 'पक्षान्त्यबिम्बो'द्गत—
मार्तण्डोपमसोमसुन्दरगुरोः शिष्याग्रणीः सूरिराट् ।
श्रीमानस्ति विशालराजगुरुर्विद्यानदीसागर—
स्तत्पादप्रणतोऽस्म्यहं स्तुतिगिरा जैनस्तुतेः पञ्जिकाम् ॥"
" सह पञ्चविंशदक्षरपाठकपट्टालङ्कारिणा ज्ञानिष्ठ सुगमेयम् ।
वर्षे 'तिथिरवि'(१५१२)मितेऽस्मिन् शितिपक्षे तपसि सुकृत्ये ॥"

पद्येनानेनानुमीयते यत् श्रीजिनसूरीणां सत्तासमयः षोडश शताब्दीपर्यन्तकः ।

रचनास्थलादिविचारः—

" इय जिणसूरिहिं आणंदपुरंमि पासनाह संथुणीय भणीइं' इति २६२तमस्य पद्यस्य पूर्वार्धावलोकनेन ज्ञायते यद् आनन्दपुरे प्रणयनं व्यधायि मनोमोहकस्य कथानकस्यास्य । किञ्चात्रापि स्वनामोल्लेखोऽकारि कर्तृसूरिभिरिति दृश्यते । उपलभ्यमानोऽस्य प्राभाविकीकथाप्रणयितृभिरेभिः श्रीपार्श्वनाथस्य स्तुतिरनेकशो यदि कृता तर्हि तत् स्वाभाविकम् । एवं सति कथानकस्य नाङ्कनसूराः श्रीजिनसूरा अस्तुवन् त्रयोविंशतितमं श्रीपार्श्वनाथं धरणेन्द्र-पद्मावतीपूजितपादमिति न विस्मयास्पदम् । तत्रापि जीराउलापार्श्वनाथो विशेषतः प्रियः कर्तृणामिति प्रतिभाति २७९तमपद्यस्याद्याक्षराणां निरीक्षणात् । अपरञ्च तेषां श्रीपार्श्व

---

१ अङ्कानां वामतो गतिरिति नियम उल्लङ्घि(घि), किन्तु अन्यैरप्येतत्कारि एतज्जिज्ञासुभिर्दृश्यतां श्रीशोभनस्तुतेर्मदीया भूमिका ( पृ. ५०–५१ )।

नाथे प्रेमानुबन्धस्तीव्रतर इत्यवगम्यते एतत्कथानक( पृ० ६३ )-गतेन पद्यचतुष्केन रूपसेनचरित्र( पृ० १४ )गतेन च निम्न-लिखितेन पद्ययमलेन—

"सुप्रभातः सुदिवसः, कल्याणं मेऽद्य मङ्गलम् ।
यद् वीतराग ! दृष्टोऽसि, त्वं त्रैलोक्यदिवाकर ! ॥ ४१ ॥
ॐ नमः पार्श्वनाथाय, विश्वचिन्तामणे ! प्रभो ! ।
ॐ धरणेन्द्र-वैरोट्या-पद्मादेवीयुताय ते ॥ ४२ ॥"

किञ्च एतच्चरित्रे ( पृ० ४४ ) समस्या तदुत्तरं च श्रीपार्श्वनाथ-माश्रित्य वर्तेते, तद्यथा—

"अट्ठ मुह नयण सोलस, पनरस जीहाओ चलणजुअलं च ।
दुन्नि जीय दुन्नि करयल, नमामि हं एरिसं देवं ॥ १२३ ॥"

उत्तरम्—श्रीपार्श्वनाथः ।

**श्रीविशालराजसूरीशपरिचितिः—**

**श्रीविशालराजसूरीशाः श्रीसोमसुन्दरसूरीणां शिष्याः । एतेषां बहवः शिष्या आसन् । तत्राज्ञातनामधेयैरेकैर्न्यरचि**

---

१ अन्ये द्वे समस्ये तदुत्तरे च तत्रैवम्—

"उप्पन्नविमलनाण, लोयालोयप्पयासदक्खो वि ।
जं केवली न पासइ, तं दिठ्ठ अज्ज राइए ॥१२४॥"

उत्तरम्—'स्वप्नः ।'

का चीवराण पवरा ? मरुदेसे किंच दुलहं होइ ? ।
किं पवणाओ चवलं ? दिवसकयं किं हरइ पावं ? ॥ १२५ ॥
उत्तरम्—'पडिक्-क-मणं' ।"

वीतरागस्तोत्रस्य पञ्जिका १५१२तमे वैक्रमीयाब्दे। वाग्भटालङ्कारस्य वृत्तेरपि[1] विधातार इमे मुनीश्वराः। हरिशब्दार्थगर्भितश्रीवीतरागस्तवस्य प्रणयितारः[2] श्रीविवेकसागरा एषां विनेयाः। पं.मेरुरत्नगणयोऽप्येषां छात्राः। तत्र उपदेशमालाविवरणप्रान्तस्थोऽयमुल्लेखः प्रमाणम्—

"लिखितं श्रीवटपद्रनगरे श्रीसोमसुन्दरसूरिशिष्यश्रीविशालराजसूरितच्छिष्यपं. मेरुरत्नगणितच्छिष्याणुसंयममूर्तिगणिना"

श्रीसोमधर्मगणिकृताया लघूपदेशसप्ततिकायाः प्रशस्तिगतेन निम्नलिखितेन पद्येन पोस्फुरीति एतेषां प्रभावशालिता—

"जगदाह्लादकवचसो विशालराजा जयन्तु सूरिवराः।
दग्धेऽपि वपुषि येषां न भस्मसाच्चोलपट्टोऽभूत् ॥८॥"

---

१ वाग्भटालङ्कारस्य विविधा वृत्तयो वर्तन्ते, तथाहि—

(१) श्रीसिंहदेवगणिविरचिता टीका (काव्यमालायां ४८तमगुच्छकरूपेण मुद्रिता), (२) श्रीजिनवर्धनसूरिविरचिता काव्यकुमुदचन्द्रिकाख्या व्याख्या, (३) श्रीक्षेमहंसगणिरचिता वृत्तिः, (४) श्रीअनन्तभट्टसुतगणेशगुम्फिता विवृतिः (५) श्रीराजहंसोपाध्यायप्रणीता टीका।

२ जिनवर! परमार्हतः स्तवस्ते
व्यरचि मया गुरुसुन्दराख्य!
प्रवितर सुविशालराजराजद्-
गुण! मम वर्यविवेकसागरम् ॥१०॥

**प्रियङ्करनृपकथायाः कतिपयेषु स्थलेषु विशिष्टशब्दप्रयोगादयो दरीदृश्यन्ते । यथाहि—**

उकार ( पृ. २ )–ककार ( पृ. ५५ )–तकार ( पृ. ५ )–पकार ( पृ. २, १२ )–वकार ( पृ. ४ )–पादपूर्ति ( पृ. ३, २८, ८५)–द्व्यर्थात्मकपद्य ( पृ. १ )–समस्या ( पृ. ४४, ७९ )प्रमुख-विशिष्टतासमलङ्कृतायां प्रियङ्करकथायां कतिपयानां ग्रन्थानां नामानि सन्ति । यथाहि—उत्तराध्ययनं ( पृ. ३४ ), दशवैकालिकं ( पृ. २१, ३२ ), नैषधं ( पृ. ५० ), विवेकविलासः ( पृ. ४३ ), शक्रस्तवः ( पृ. ८५ ), स्थानाङ्गम् ( पृ. ९४ ) ।

अस्यां कथायां विविधा विषया वर्णिताः–अष्टप्रकारपूजा ( पृ. २२ ), छिक्काविचारः ( पृ. ६–७ ), दन्तोत्पत्तिविचारः ( पृ. ७७–७८ ), पक्वान्नादिनामानि ( पृ. २८–२९ ), भोगविचारः ( पृ. १६, ३६, ५३ ), मुहूर्तमहिमा ( पृ. २५ ), वर्षकृत्यम् ( पृ. ८० ), वास्तुरीतिः ( पृ. ४, ४७ ), शकुनविचारः ( पृ. १३, ४५, ४६ ), शपथस्वरूपं ( पृ. ५८, ५९ ), स्वप्नविचारः ( पृ. १२, ४३, ४६, ६६ ), स्वराष्टकं ( पृ. १६ ) च ।

अस्यां कथायां जैनपारिभाषिकशब्दा अपि विलोक्यन्ते । तेषु कतिचिदिमे—

अभिग्रह ( पृ. ८१ ), आम्नाय ( पृ. ३३), आशा( सा )तना (पृ. ८३, ८४, ८६), चैत्यवन्दन (पृ. ८३), द्वादशव्रत (पृ. ३३), नमस्कार (पृ. ८५), नवतत्त्व (पृ. ३३), नैषेधिकी (पृ. ८४ ), पल्योपम ( पृ. ८१ ), प्रत्याख्यान ( पृ. ३३ ), रत्नत्रय ( पृ. ३३ ), विकृति ( पृ. ३४ ), सङ्घवात्सल्य ( पृ. ४८ ), सम्यक्त्व

---

१ पार्श्वविभक्तिप्रयोगपुरस्सरं पद्यं वर्तते ८४तमे पृष्ठे । परोक्षभूतकालादिप्रयोग-प्राचुर्यं समस्ति ७६तमे पृष्ठे ।

( पृ. ३३ ), सागर ( पृ. ८१ ), साधर्मिकवात्सल्य ( पृ. ९० ) सामायिक ( पृ. ३३, ९३ )।

श्रीप्रियङ्करनृपकथाया वर्तन्तेऽनेका हस्तलिखितप्रतयः, तथाहि—

पुण्यपत्तनस्थप्राच्यविद्यासंशोधनमन्दिरे द्वे प्रती। तत्रैका २८पत्रात्मिका 'लखितं मुनी शांतिसागर' इति प्रान्तस्योल्लेखसङ्कलिता, अन्या तु २५पत्रात्मिका निम्नलिखितग्रन्थमानलेखकनाम-तत्समयनिर्देशपूर्विका—

"ग्रन्थमानम् १०००। संवत १८२३ वर्षे मार्गशीर्षमासे शुक्लपक्षे दशमीतिथौ गुरौ वारे रेवतीनक्षत्रे वरीमान् (वरीयसि?) योगे श्री'सूरति'बन्दिरे वृद्धापणे नव्योपाश्रये श्रीविधिपक्षगच्छाधीश्वरपूज्यभट्टारकश्रीउदयसागरसूरीश्वराणां विजयिनि राज्ये शिष्यपं.श्रीदर्शनसागरगणिना लिपीचक्रे ( लिपिः कृता?) प्रियङ्करनृपकथा। श्रेयः श्रेयकः।

उदका-ऽनल-चौरेभ्यो, मूर्खकेभ्यस्तथैव च।
रक्षणीया प्रयत्नेन, एवं वदति पुस्तिका ॥ ३ ॥

श्रीसंभवनाथप्रसत्तेः।"

एतत्प्रतियमलाधारेण न्यायतीर्थव्याकरणतीर्थपं.बेचरदासमहाशयैः संशोधितस्य पुस्तकस्य डेति संज्ञा मया निर्धारिता संशोधनसमयेऽस्य सुगमस्य हृदयङ्गमस्य च कथानकस्य।



१ प्रियङ्करनृपकथायाः प्रारम्भे 'श्रीवामासूनुसद्वरः' इत्युल्लेखो वर्तते, तं दृष्ट्वा डेक्कनकॉलेजरिपॉर्टसञ्ज्ञके ग्रन्थे जैनग्रन्थावल्यां च कर्तृनाम सद्वरेति निर्दिष्टं परन्तु तद् भ्रान्तिमूलकं ज्ञेयम्।

# उपसर्गहरस्तोत्रस्य समीक्षणम्



अस्मिन् ग्रन्थे प्रकाशितस्य प्राकृतभाषानिबद्धस्य स्तोत्रस्य विषये क्रियतेऽयं प्रस्तावः। एतत्स्तोत्रस्य कर्तारः श्रीभद्रबाहुस्वामिन इति निर्विवादम्, किन्तु किमिमे चतुर्दशपूर्वधराः श्रीस्थूलभद्रगुरुरूपेण विख्याता आहोस्विद् दशनिर्युक्ति-पर्युषणाकल्प–भद्रबाहुसंहिता–नवग्रहस्तोत्र-द्वादशभावजन्मप्रदीप-वसुदेवहिण्डीप्रणेतृरूपेण प्रसिद्धा इति प्रश्नोत्तरं विवादास्पदं साम्प्रतिकपण्डितानाम्। कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिवरविरचिते परिशिष्टपर्वणि श्रीभद्रबाहुस्वामिवृत्तान्तो वर्वर्ति, परन्तु तत्र कस्यचिद् ग्रन्थस्य गुम्फितार इमे इति स्वरूपात्मक उल्लेखो नास्ति, अतः समुपतिष्ठति संशीतिः। एवं सति संसूच्यते न्यायतीर्थ-व्याकरणतीर्थपण्डितबेचरदासैर्यदुत श्रीउपसर्गहरस्तोत्रकर्तारोऽपूर्वब्रह्मचारिश्रीस्थूलभद्रानां गुरुभ्यो भिन्नाः।

---

१ समीक्ष्यतां श्रीदेवचन्द्रसूरिकृतस्य शान्तिनाथचरित्रस्य प्रारम्भिकोऽयमुल्लेखः—

"वंदामि भद्दबाहुं जेण य अइरसियं बहुकहाकलियं।
रइयं सवायलक्खं चरियं वसुदेवरायस्स॥"

अपरञ्च 'श्रीहंसविजयजीजैनलायब्रेरी'ग्रन्थमालाया प्रसिद्धिं नीतायाः श्रीनर्मदासुन्दरीकथाप्रान्ते प्रोक्तं च—

"इति हरिपितृहिण्डेर्भद्रबाहुप्रणीते—र्विरचितमिह लोकश्रोत्रपात्रैकनेयम्।
चरितममलमेतन्नर्मदासुन्दरीयं, भवतु शिवनिवासप्रापकं भक्तिभाजाम्॥ २४६॥"

एते तु वराहमिहिरस्य समसमयिनः ख्रिस्तीय( ५०५–५८७ )-पञ्चशताब्दीं च समलङ्कृतवन्तः। पारम्पारिके प्रवादे भद्रबाह्वोः पृथक्त्वं न दृष्टिपथमवतरति। तत्र प्रथमे एव लक्ष्यीकृताः सम्भाव्यन्ते। श्रीजिनसूरैरपि इयमेव प्रणालिका स्वीकृतेति तर्क्यते प्रियङ्करनृपकथाया निम्नलिखितनातिवाक्यपद्यगत 'ज्ञानादित्य' विशेषणेन—

" उपसर्गहरस्तोत्रं कृतं श्रीभद्रबाहुस्वामिना।
ज्ञानादित्येन सङ्घाय शान्तये मङ्गलाय च ॥ "

किञ्च समर्थ्यते चेदं प्रियङ्करकथा( पृ. ३३ )गतेन 'श्रीभद्रबाहुकृतकेवलिना' इत्युल्लेखेन।

स्तोत्रमानम्—

उपसर्गहरस्तोत्रं कियद्गाथाप्रमाणकमिति प्रश्नः। इदं पञ्चगाथात्मकमित्यनुमीयते श्रीजिनप्रभीयवृत्तिसमवलोकनेन यतस्तत्र न केवलं पञ्चैव गाथा व्याख्याताः, किन्त्वधिकगाथासद्भावसूचकः प्रघोषः प्रवादोऽपि न दिङ्मात्रेणाप्युल्लिखितः। किन्तु प्रोक्तं श्रीजिनसूरैः प्रियङ्करनृपकथायां द्व्यशीतितमे पृष्ठे 'षड्गाथाप्रमाणकम्'। अपरञ्च श्रीहर्षकीर्तिसूरिभिः सप्तगाथात्मकं स्तोत्रं समसूचि, परन्तु गाथे अधिके न निवेदिते केनापि कारणेन। अधुना एकविंशतिर्गाथा दरीदृश्यन्ते, परन्तु बहुधा तासां प्रक्षेपत्वं स्वीक्रीयते समीक्षकैः।

उपसर्गहरस्तोत्रस्य [1]वृत्तयः—

१ श्रीजिनसूरैः कस्याश्चनैकस्या वृत्तेरुल्लेखः कृतो द्व्यशीतितमे पृष्ठे, परन्तु केयमिति निश्चयितु न क्षमोऽहम्।

( १ ) बृहद्वृत्तिः ।

( २ ) श्रीजिनप्रभसूरिकृता 'अर्थकल्पलता'नाम्नी वृत्तिः । अस्यां त्रयोविंशतितमश्रीपार्श्वनाथं नागपतिधरणेन्द्रं तत्पत्नीपद्मावतीं शासनरक्षकश्रीपार्श्वयक्षं चाश्रित्य व्याख्या कृता सूरिराजैरिमैः । सप्तस्मरणानीति ग्रन्थे मुद्रापितेयं मदीयसंस्करणादिपूर्विका श्रेष्ठिदेवचन्द्रलालभाइजैनपुस्तकोद्धारसंस्थया ।

( ३ ) श्रीजयसागरमुनिरचिता वृत्तिः ।

( ४ ) श्रीपूर्णचन्द्रसूरिसूत्रिता श्रीचन्द्रसेनक्षमाश्रमणसाक्षिपूर्विका ( पृ. ४ ) टीका । इयं मुद्रापिता भावनगरस्थश्रीआनन्दविजयजैनग्रन्थमालायाम् । नानामन्त्राम्नायप्रक्रियापुरस्कृता लघुवृत्तिरियं गुरुमुखज्ञानविद्यावादमाहात्म्येन गुम्फिता सूरिवर्यैरिति ज्ञायते निम्नलिखितपद्यप्रेक्षणेन—

" उपसर्गहरस्तोत्रं वृत्तं सङ्क्षेपतो गुरुमुखेन ।
विज्ञाय किमपि तत्त्वं विद्यावादादिसद्ग्रन्थात् ॥ "

( ५ ) द्विजर्षिश्रीपार्श्वदेवगणिगुम्फिता विवृतिः ।

---

१ विक्रम[illegible] पूर्णचन्द्र[illegible] मिन्ना न वेति [illegible] ।

२ एतस्य [illegible] व्याख्यानम् ।

३ एभिः [illegible] हस्तका[illegible]

( ६ ) जैनग्रन्थावल्यामुल्लिखिता लघुवृत्तिः ८५०श्लोक-प्रमाणिका ।

( ७ ) श्रीहर्षकीर्तिसूरिरचिता वृत्तिः । मुद्रापिता सप्तस्मरणान्याख्ये ग्रन्थे ।

( ८ ) श्रीसिद्धिचन्द्रगणिकृता वृत्तिः । इयं च मुद्रापिता सप्तस्मरणान्याख्ये ग्रन्थे ।

## स्तोत्रगौरवम्—

उपसर्गहरस्तोत्रगौरवं संसूच्यते प्रियङ्करनृपकथया विविध-व्याख्यासाहित्येन च । मन्त्रयन्त्रमयमिदं स्तोत्रं, तदाम्नायाश्च वर्तन्ते इति वृत्तान्तो विलसति ३३, ५०, ५४, ६२, ७६, ८१, ८२ इत्यङ्कात्मकेषु पृष्ठेषु । किञ्च पद्मावती-वैरोट्या-धरणेन्द्रा अधिष्ठातृरूपेण वर्तन्ते ।

एवं प्रियङ्करकथादिपरिचयात्मके वक्तव्ये यथामति प्रति-पादिते सहृदयसाक्षरेभ्यः स्खलितस्थलसम्बन्धिनीं क्षमां याचमानो विरमामि श्रीरसिकदासतनुजः कापडियेत्युपाह्वः

आषाढकृष्णैकादश्यां
१९८४तमे वैक्रमीयाब्दे,
मोहमयीनगर्याम्

हीरालालः ।

---



श्रेष्ठि-देवचन्द्र-लालभाइ-जैनपुस्तकोद्धार-ग्रन्थाङ्के—

श्रीजिनसूरमुनिवर्यविरचिता

# श्रीउपसर्गहरस्तोत्रप्रभावगर्भिता

## ॥ प्रियङ्करनृपकथा ॥



ॐ नमः ।

[1]वंशाब्जश्रीकरो [2]हंसो, [3]दत्तोत्तमविभावसुः ।
सदानन्दं क्रियात् सारं, श्रीवामासूनुर्[4]सद्वरः ॥ १ ॥

ॐकारमध्यगतह्रींपरिवेष्टिताङ्गं
पद्मावतीधरणराजनिषेव्यमाणम् ।
पार्श्वं जिनेश्वरमहं प्रणिपत्य भक्त्या
वक्ष्ये प्रभावमुपसर्गहरस्तवस्य ॥ २ ॥

उपसर्गहरस्तोत्रं, कृतं श्रीभद्रबाहुना ।
ज्ञानादित्येन सङ्घस्य, शान्तये मङ्गलाय च ॥ ३ ॥

एतत्स्तवप्रभावो हि, वक्तुं केनापि शक्यते ? ।
गुरुणा हरिणा वा वाक्-प्रह्वयाऽप्येकजिह्वया ॥ ४ ॥

उपसर्गहरस्तोत्रे, स्मृते स्युः शुभसम्पदः ।
संयोगसन्त[6]तिर्नित्यं, स्युः समीहितसिद्धयः ॥ ५ ॥

---

१ कुलकमलविकासी । २ सूर्यः । ३ दत्तं उत्तमं विभारूपं वसु-धनं येन सः; हंसपक्षे तु दत्त उत्तमो विभावसुः-अग्निर्येन सः । ४ 'सद्धरिः' इत्यपि क्वचित् । ५ 'नमस्कारः श्रीगुरुनामसारः' इत्यधिकः ख-ग-घ-पाठः । ६ '०ती नित्यं' इति ख-पा

उदयो १ ह्यपदो २ पाया ३, उत्तमत्व ४ मुदारता ५।
उकाराः पञ्च पुंसः स्यु–रुपसर्गहरस्मृतेः ॥ ६ ॥
पुण्यं १ पापक्षयः २ प्रीतिः, ३ पद्मा ४ च प्रभुता ५ तथा।
पकाराः पञ्च पुंसां स्युः, पार्श्वनाथस्य संस्मृतौ ॥ ७ ॥
उपसर्गहरस्तोत्र–मष्टोत्तरशतं सदा।
यो ध्यायति स्थिरस्वान्तो, मौनवान् निश्चलासनः ॥ ८ ॥
तस्य मानवराजस्य, कार्यसिद्धिः पदे पदे।
भवेच्च सततं लक्ष्मी–श्चञ्चलाऽपि हि निश्चला ॥ ९ ॥–युग्मम्
जलेऽनले नगे मार्गे, चौरे वैरे ज्वरे गिरे (हरेऽम्बरे १)।
भूते प्रेते स्मृतं स्तोत्रं, सर्वभयनिवारकम् ॥ १० ॥
शाकिन्यादिभयं नास्ति, न च राजभयं जने।
षण्मासं ध्यायमानेऽस्मि–न्नुपसर्गहरस्तवे ॥ ११ ॥

स्तवकर्तुराशीर्वचनमाह—

उवसग्गहरं थोत्तं, काऊणं जेण संघकल्लाणम्।[२]
करुणायरेण विहियं, स भद्दबाहू गुरू जयउ ॥ १२ ॥
प्रत्यक्षा यत्र नो देवा, न मन्त्रा न च सिद्धयः।
उपसर्गहरस्यास्य, प्रभावो दृश्यते कलौ ॥ १३ ॥

---

१ इमे द्वे पद्ये ख-प्रत्यां न वर्तेते, परन्तु तत्स्थाने निम्नलिखितं पद्यम्—

लक्ष्मीः सर्पति नीचमर्णवपयःसङ्गादिवाम्भोजिनी–
संसर्गादिव कण्टकाकुलपदा न क्वापि धत्ते पदम्।
चैतन्यं विषसन्निधेरिव नृणामुज्जाशयत्यञ्जसा
धर्मस्थाननियोजनेन गुणिभिः ग्राह्यं तदस्याः फलम् ॥ १ ॥

२ छाया—

उपसर्गहरं स्तोत्रं कृत्वा येन सङ्घकल्याणम्।
करुणाकरेण विहितं स भद्रबाहुर्गुरुर्जयतु ॥

आप्नोत्यपुत्रः सुतमर्थहीनः
श्रीदायते पत्तिरपीशतीह ।
दुःखी सुखी चाथ भवेन्न किं किं
त्वद्रूपचिन्तामणिचिन्तनेन ? ॥ १४ ॥

एकया गाथयाऽप्यस्य, स्तवस्य स्मृतमात्रया ।
शान्तिः स्यात् किं पुनः पूर्णं, पञ्चगाथाप्रमाणकम् ? ॥१५॥
उपसर्गाः क्षयं यान्ति, च्छिद्यन्ते विघ्नवल्लयः ।
मनः प्रसन्नतामेति, ध्यातेऽस्मिन् स्तवपुङ्गवे ॥ १६ ॥
यथा प्रियङ्करो राजा, विपुलां प्राप सम्पदम् ।
उपसर्गहरस्तोत्र--ध्यानान्मानाश्रितं पदम् ॥ १७ ॥

अत्र प्रियङ्करनृपकथा, यथा—

'मगध' देशे 'अशोकपुरं' नाम नगरम् । यत्रावासास्त्रिभूमिका महेभ्यानाम्, यत्राकराः सकलवस्तूनाम्, आदरोऽतिथिभोजने, आज्यानि प्राज्यानि भोजने, आदिमूर्तिः प्रासादे, आलस्यं विवादे, आडम्बराणि राजकुले, भोग्युपद्रवो नकुले, नापरत्र । तत्राशोक(चन्द्र)राजा राज्यं करोति प्रतापी विक्रमी नयी । अशोकमाला पट्टराज्ञी पुष्पमालेव विवेकविनयशीलक्षमादिगुणपरिमलयुता । तयोः पुत्रास्त्रयः अरिसूर १ रणसूर २ दानसूरा ३ ख्याः । देवगुरुपितृमातृभक्ताः । राज्यसारं त्विदमेव । उक्तं च—

१ 'वा प्रभवे न किं किं' इति ख-पाठः । २ 'पठ्यमाने स्तवे सदा' इति ख-पाठः । ३ '०गारः' इति घ-पाठः । ४ '०थिजने पूज्याभिः पूज्यश्रीयुगादिमूर्त्तिः' इति घ-पाठः ।

"चित्तानुवर्तिनी भार्या, पुत्रा विनयतत्पराः।
वैरिमुक्तं च यद् राज्यं, सफलं तस्य जीवितम् ॥१८॥

वापी वप्रविहारवर्णवनिता वाग्मी वनं वाटिका
वैद्या ब्राह्मणवारिवादिविबुधा वेश्या वणिग् वाहिनी।
विद्या वीरविवेकवित्तविनया वाचंयमो वल्लिका
वस्त्रं वारणवाजिवेसरवरं राज्यं वकैः शोभते[2]॥ १९ ॥"

अन्यदा अरिसूरस्य विवाहमहोत्सवः प्रारब्धः। राज्ञा विज्ञानिन आकारिताः। सूत्रधारा नव्यमावासं कुर्वन्ति वास्तुरीत्या।

उक्तं च—

"वैशाखे श्रावणे मार्गे, फाल्गुने क्रियते गृहम्।
शेषमासेषु न पुनः, पौषो वाराहसंमतः॥ २० ॥

पूर्वस्यां श्रीगृहं कार्य—माग्नेय्यां तु महानसम्[3]।
शयनं दक्षिणस्यां तु, नैर्ऋत्यामायुधादिकम्॥ २१ ॥

---

१ एतत्स्थाने घ-प्रत्यामिदं पद्यम्—

चिन्तानुवर्तिनी भार्या, स्वरूपा सगुणा सदा।
मितवक्ता पतिभक्ता, प्राप्यं पुण्यतः स्त्रिया (?)।

पार्श्वस्थे उल्लेखश्च यथा—

विरहिणी हरिणी जिम जोयती
भमहसु माजिम राति पुकारती।
सुरतकारणि कंत हकारती
मरकलइ हसती मनमोहती॥

२ 'शोभित्ते' इति-घ पाठः। ३ पाकशाला।

भुजिक्रिया पश्चिमायां, वायव्यां धान्यसङ्ग्रहः ।
उत्तरस्यां जलस्नान--मैशान्यां देवतागृहम् ॥ २२ ॥"

आवासं चित्रकराश्चित्रयन्ति । स्वर्णकारा आभरणानि घटयन्ति । अस्मिन्नवसरे 'पाडली'पुरात् स्वर्णकारा देवतादत्तवरा आगता[2] राज्ञो मिलिताः प्रधानैः स्वागतं पृष्टम् । राज्ञा ते पृष्टा विज्ञानस्वरूपम् । ते प्रोचुः—देवतावरादस्मद्घटितमाभरणं यः परिदधाति तस्य राज्यार्हस्य राज्यं भवति । अपरेषां जनानां महत्त्वं स्यात् । यः प्राग् राजा भवति स रा[3]ज्ञामधिराजा स्यात् । राजा तद्वचनेन हृष्टस्तेषां अपूर्वहारघटनायादेशं दत्तवान् । स्वर्णमुक्ताफलजात्यहीरकरत्नादि यद् विलोक्यते तद् कोशाधीशपार्श्वे ग्राह्यम् । आप्तपुरुषास्तत्र नियुक्ताः । यतः केषामपि विश्वासो न कार्यः । उक्तं च—

[4]" ताइ तेली तेरमउ, [5]तंबोली तलार ।
[6]ठग ठक्कुर अहि दुज्जणह, जे वीससइ ते गमार ॥२३॥"

ततस्तैः षण्मास्या हारो घटितः । राज्ञो वर्धापनिका दत्ता । [7]प्रभाते राजसभायां हार आनीतः । राजा तं हारं दृष्ट्वा हृष्टः ।

---

१ 'मस्यां' इति घ-पाठः । २ 'आगताः' ते राज्ञोऽग्रे उक्तम्—'अस्मद्घटितान्याभरणानि यः परिदधाति' इति ख पाठः । ३ 'राजाधिराज.' इति ख-घ-पाठः ।

४ तात्पर्यम्—

वस्त्रतानके तैलकारे मौक्तिके (?) ताम्बूलिके तलारक्षके ।
ठगे ठक्कुरेऽहौ दुर्जने यो विश्वसिति स मूर्खः ॥

५ 'तच्छड तीड सोनार' इति क-पाठः। ६ 'पंच तकारा परिहरु पछइ करु विवहार' इति घ-पाठः । ७ 'प्रातः' इति घ-पाठः ।

सर्वेऽपि लोका दृष्ट्वा विस्मिताः । 'देववल्लभ' इति नाम हारस्य दत्तम् । स्वर्णकारा वस्त्रधनादि दत्त्वा विसर्जिताः । मुहूर्तविदो राज्ञा पृष्टा मुहूर्तं विलोकयन्ति । तैर्विलोक्य प्रवरः क्षणः प्रोक्तः । ततो मौहूर्तैः नृपो मुहूर्तसमये हारमावाप्य यावत् स्वकण्ठे स्थापयति तावत् अकस्मात् सभामध्ये नैर्ऋत्यकोणे छिक्का जाता ।

राज्ञोक्तम्—कीदृशी एषा ? । शास्त्रज्ञेनोक्तम्—राजेन्द्र ! सामान्या । यत उक्तम्—

" ठाणट्ठियस्स पढमं नियकज्जं किंपि काउकामस्स ।
होइ सुहा असुहावि य छीआ दिसिविदिसिभेएणम् ॥ २४ ॥
पुव्वदिसा धुवलंभो १ जलणे हाणी २ जमालए मरणम् ।
नेरइए उव्वेओ ४ पच्छिमीए परमसंपत्ती ५ ॥ २५ ॥
वायव्वे सुहवत्ता ६ धणलाहो होइ उत्तरे पासे ७ ।
ईसाणे सिरिविजओ ८ रज्जं पुण बंभठाणंमि ९ ॥ २६ ॥

---

१ ' विलोक्य विस्मिताः ' इति ख-पाठः । २ 'दत्तं हारस्य' इति ख-पाठः । ३ ' मुहूर्तं विलोक्य तैः ' इति ख-पाठः, ' मुहूर्तं व्यलोकयन् ' इति ग-पाठः, मुहूर्तं लोकयित्वा ' इति घ-पाठः ।

४ छाया—

स्थानस्थितस्य प्रथमं निजकार्यं किमपि कर्तुकामस्य ।
भवति शुभाऽशुभाऽपि च क्षुता दिग्विदिग्भेदेन ॥ १ ॥
पूर्वदिशि ध्रुवलाभः ज्वलने (अग्निकोणे) हानिः यमालये (दक्षिणस्यां) मरणम् ।
नैर्ऋत्यां उद्वेगः पश्चिमायां परमा सम्पत्तिः ॥ २ ॥
वायव्ये सुख(शुभ)वार्ता धनलाभो भवति उत्तरे पार्श्वे ।
ईशाने श्रीविजयौ राज्यं पुनः ब्रह्म(ऊर्ध्व)स्थाने ॥ ३ ॥

पेहपट्ठियस्स समुहा छीया मरणं नरस्स साहेइ ।
वज्जेह दाहिणंपि य वामापि धियसिद्धिकरा ॥ २७ ॥"

ततो राज्ञा हारः स्वकोशे स्थापितः । पुनः अपरमुहूर्ते भाण्डागाराद् हारं नृप आनाययामास । भाण्डागारिणा तत्र विलोक्य राज्ञोऽग्रे विज्ञप्तम्—राजन् ! तत्र हारोऽदृश्यमानोऽस्ति । केनापि गृहीतः । नृपः प्राह—अत्र कोऽन्यो मुमूर्षुरायाति ?। भाण्डागारिकेणोक्तम्—चेदहं जानाम्यपि तदा दिव्यं करोमि शपथान् करोमि । मन्त्री[3] प्राह—अज्ञात्वा कस्यापि न वाच्यम् । यतः—

" अविमृश्य कृतं कार्य, पश्चात्तापाय जायते ।
न पतत्यापदाम्भोधौ, विमृश्य कार्यकारकः ॥ २८ ॥"

तेन पटहं मन्त्रिवचनान्नृपो दापयामास, यथा—

'देववल्लभ'हारस्य, शुद्धिं यः कथयिष्यति ।
सन्तुष्टो नृपतिस्तस्मै, दास्यति ग्रामपञ्चकम् ॥ १ ॥

इत्युच्चारणपूर्वकं सप्त दिनानि सर्वत्र सेवकैः पटहो दत्तः । परं च केनापि वाद्यमानः स न स्पृष्टः । ततो राज्ञा ज्योतिर्विदः पृष्टाः । ते प्रोचुः—राजन् ! हारो न यास्यति । पुनस्तत्रैको भूमिदेवनामा कश्चिज्ज्योतिषिको वसति । तमाकार्य नृपः पृष्टवान् हारलाभम् । तेनोक्तम्—राजेन्द्र ! अद्य रात्रौ विलोक्य कथयिष्यामि । तद्दिनं दत्त्वा प्रातराहूतः सः । तेनोक्तम्—

1 छाया—

पथप्रस्थितस्य संमुखा क्षुता मरणं नरस्य कथयति ।
वर्जयत दक्षिणामपि च वामाऽपि धृतिसिद्धिकरा ॥

२ 'राजेन्द्र ! तत्र हारो नास्ति' इति घ-पाठः । ३ 'मन्त्रिणः प्रोचुः राज्ञोऽग्रे—अज्ञात्वा' इति ख-पाठः । ४ 'स्थापितः.' इति क-घ-पाठः ।

राजेन्द्र ! न प्रष्टव्यम्, अकथिते स्तोकं दुःखं, कथिते तु महद् दुःखं भविष्यति । राज्ञा विशेषतः पृष्टः स प्राह—लक्षमूल्यो हारो यत्समीपाल्लप्स्यसे स तव पट्टे राजा भविष्यति, नात्र संशयः, देवतोक्तत्वात्; परं बहुभिर्वर्षैः । प्रत्ययोऽत्र–इतस्तृतीयदिने हस्ती मरिष्यति । राजा कर्णयोस्तप्तत्रपुप्रायं तदाकर्ण्य क्षणं मूर्च्छित इव तस्थौ । मन्त्री प्राह—चिन्ता न कार्या । भवितव्यता केनापि न टलति । यतः—

"भवितव्यं भवत्येव, नारिकेलफलाम्बुवत् ।
गन्तव्यं गमयत्येव, गजभुक्तकपित्थवत् ॥ २९ ॥"

तृतीयदिने गजो विपन्नः । तदुक्तं सत्यं जातम् । उक्तं च—

"अवश्यं भाविभावानां, प्रतीकारो न विद्यते ।
तदा दुःखैर्न बाध्यन्ते, नलरामयुधिष्ठिराः ॥ ३० ॥

उदयति यदि भानुः पश्चिमायां दिशायां
विकसति यदि पद्मं पर्वताग्रे शिलायाम् ।
प्रचलति यदि मेरुः शीततां याति वह्निः
तदपि न चलतीयं भाविनी कर्मरेखा ॥ ३१ ॥"

ततो राजा साहसं कृत्वा स्वपुत्रस्य विवाहं महता महेन कारितवान् । हारगमनविवाहभवनाभ्यां नृपो विषादहर्षभाग् जातः । राजा मन्त्रिणं प्रत्याह—हारतस्करस्य किञ्चिद्देवेन राज्यं प्रोक्तं तदसम्भाव्यम् । तस्य(स्मै) शूल्यामेव राज्यं दास्यामि । मत्पुत्रा एव मद्राज्यं पालयिष्यन्ति । मन्त्रिणोक्तम्—स्वामिन् !

---

१ 'यच्च यात्येव' इति क-घ-पाठः । २ क-घ-प्रत्यां नोपलभ्यते पद्यमिदम् ।

एवमेवेति । राजा तद्वाक्ये राज्यगर्वेण गजनिमीलिकां विधाय राज्यं करोति, परं—

" स्वचित्तकल्पितो गर्वः, कस्य नाम न जायते[1] ।
उत्पाट्य[2] टिट्टिभः पादौ, शेते भङ्गभयाद् भुवः[3] ॥ ३२ ॥"

इतश्च तत्रैव पुरे पासदत्तश्रेष्ठी महाश्रावको भार्याप्रियश्रीयुतो वसन् कर्मयोगेन निर्धनो जातः । ततो नगरं मुक्त्वा आसन्ने 'श्रीवास' ग्रामे बहुकौटुम्बिकनिवासे वसति, सुखेन निर्वाहं करोति । यत उक्तम्—

" नवमन्नं नवं शाकं, सुगन्धाज्यं दधीनि च ।
स्तोकव्ययादिह[4] ग्रामे, क्रियते मिष्टभोजनम् ॥ ३३ ॥ "

परं[5] तत्र बहूपक्रमकरणेऽपि धनं नोत्पद्यते । यतः—

" यत्र तत्रापि यातानां, पूर्वं कर्म सहानुगम् ।
देशान्तरं न याति स्म, श्रुत्वा बालावचः[6] कृती ॥ ३४ ॥ "

धनं विना महत्त्वमपि न स्यात् । यतः—

" धनैर्दुष्कुलीनाः कुलीनाः क्रियन्ते
धनैरेव[7] पापात् पुनः निस्सरन्ति ।
धनेभ्यो विशिष्टो न लोकेऽस्ति कश्चिद्
धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ ३५ ॥ "

तावता तयोः[8] पुत्रो जातः । हर्षोऽभूद् दारिद्र्येऽपि । यतः—

---

१ 'विद्यते' इति घ-पाठः । २ 'उत्क्षिप्य' इति ख-पाठः । ३ 'दिवः' इति क-पाठः । ४ 'ह्मेव लभ्यन्ते मिष्ट०' इति ख-पाठः । ५ 'परं धनं नोत्पद्यते बहुपराक्रमकरणेऽपि' इति ख-पाठः । ६ 'बालवचः' इति ख-पाठः । ७ 'धनैः पुनः पापाज्जना निस्तरन्ति' इति ख-पाठः । ८ 'उभयोः' इति ख-पाठः ।

"संसारभारखिन्नानां, तिस्रो विश्रामभूमयः।
अपत्यं च कलत्रं च, सतां सङ्गतिरेव च ॥ ३६ ॥"

यावता पुत्रो वार्षिकोऽभूत् तावद् बालरोगेण मृतः। मातुर्महादुःखं जातम्। यत उक्तम्—

"नारीणां प्रिय आधारः, स्वपुत्रस्तु द्वितीयकः।
सहोदरस्तृतीयः स्या-दाधारत्रितयं भुवि ॥ ३७ ॥"

स्त्रीणामाधारः पुत्रः स्यात्। मनोनिर्वृतिकारणं पुत्रं विना भृशं दुःखिनी[1] जाता। यतः—

"ग्रामे वासो दरिद्रत्वं, मूर्खत्वं कलहो गृहे।
पुत्रैः सह वियोगश्च, दुःसहं दुःखपञ्चकम् ॥ ३८ ॥"

ततः प्रियं प्रति पत्नी प्राह। अत्रागमने तादृग् धनप्राप्तिर्नाभूत्। पुत्रोऽपि विपन्नः। लाभमिच्छतो मूलहानिरायाता। तेनाधर्मवतां ग्रामे वसनं न युक्तम्। यतः—

"यत्र विद्यागमो नास्ति, यत्र नास्ति धनागमः।
न सन्ति धर्मकर्माणि, न तत्र दिवसं वसेत् ॥ ३९ ॥"

तथाच—

"कुग्रामवासः कुनरेन्द्रसेवा
कुभोजनं क्रोधमुखी च भार्या।
कन्याबहुत्वं च दरिद्रता च
षड् जीवलोके नरका भवन्ति ॥ ४० ॥"

पुनः [2]प्रियश्री पुत्रस्नेहदुःखेन दैवमुपालभ्य प्रार्थयति।

---

१ 'दुःखी जाता माताऽयातनसा' इति ख-पाठः, 'दुःखिनी जाता प्रियश्रीः तदा' इति तु घ-पाठः। २ 'सा' इति क-पाठः।

यदि पुत्रो दत्तस्तर्हि वियोगः कस्मात् कृतः ?। दत्त्वा पश्चात् ग्रहणं सतां नोचितम् । यतः—

" जइ देसि देव ! तुट्ठो मा जम्मो देसि माणुसे लोए ।
अह जम्मं मा पुत्तं अह पुत्तं मा विओगं च ॥ ४१ ॥"

प्राणनाथ ! अत्र पुत्रदुःखं नित्यं स्मरामि । तेन 'अशोकपुरे' नगरे गम्यते तदा वरम् । भर्त्रोक्तम्—प्रिये ! नगरे स्थीयते, परं जलेन्धनतक्रादि सर्वं धनेनैव लभ्यते । व्यवहारिणां नगरे वासः, दरिद्राणां तु ग्रामे वासो युक्तः । अधुना नगरे आत्मानं कोऽपि नोपलक्षयति धनाभावात् । यत उक्तम्—

" हे दारिद्र(द्र्य)! नमस्तुभ्यं, सिद्धोऽहं त्वत्प्रसादतः ।
पश्यामि सकलान् लोकान्, न मां पश्यति कश्चन ॥ ४२ ॥"

धनं विना मित्रमपि न स्यात् । उक्तं च—

" जिंणि दिनि वित्त न अप्पणइ, तिणि दिनि मित्त न कोइ ।
कमलह सूरिज मित्त पुण, जल विण वयरी सोइ ॥ ४३ ॥ "

प्रिया प्राह पतिं प्रति—प्रायः पुरुषाः परिणामसुन्दरबुद्धयो भवन्ति तथापि मद्वचः[3] शृणुत । अस्यां भूमिकायां राङ्का(रङ्क) श्रेष्ठिवदात्मलभ्यं नास्ति । यत उक्तम्—

---

१ छाया—
यदि ददासि दैव ! तुष्टो मा जन्म ददासि मानुषे लोके ।
अथ जन्म मा पुत्रं, अथ पुत्रं मा वियोगं च ॥

२ तात्पर्यम्—
यस्मिन् दिने वित्तं न आत्मनि तस्मिन् दिने मित्र न कोऽपि ।
कमलस्य सूर्यो मित्रं पुनर्जलं विना वैरी सोऽपि ॥

३ ' सद्वचः ' इति क-घ-पाठः ।

"पुत्रः १ पशुः २ पदाति ३ श्च, पृथिवी ४ प्रमदा५ऽपि च ।
कुलश्रीवृद्धिदाः पञ्च, कुलश्रीक्षयदा अपि ॥ ४४ ॥"

तेनात्र क्षणमात्रमपि न स्थास्यते । स्त्रीकदाग्रहात् श्रेष्ठिना मानितम् । यतः—

" राज्ञां स्त्रीणां च मूर्खाणां, बालकानां तथैव च ।
अन्धानां रोगिणां चापि, बलवांश्च कदाग्रहः ॥ ४५ ॥"

ततः श्रेष्ठी नगरे वासाय सुमुहूर्ते यावच्चलति तावद् द्वाराग्रे कण्टको भग्नः पादे तस्य । चिहगा(शकुना?)भावात् स्थितः । उक्तं च—

" छीए[1] वत्थविलग्गे कह कह भणिए झत्ति कंटए भग्गे ।
दिट्ठे बिलाडसप्पे न हु गमणं सुंदरं होइ ॥ ४६ ॥"

ततः कियद्भिर्दिनै रात्रौ प्रियश्रिया भूमिं खनन्त्या मुक्ताफलं महत्तरं तेजःपुञ्जमयमविद्धं लब्धमिति स्वप्नो लेभे । प्रातः पतिं प्राह । सोऽप्युवाच विमृश्य—प्रिये ! आत्मनोः पुत्रो महत्त्ववान् भविष्यति मुक्ताफले यथा पानीयं तथा महत्त्वम् । यतः—

" नेखइ[2] नारितुरङ्गमह मुत्ताहल खग्गह ।
पाणी जांह[3] न अग्गलु गउ गिरुअत्तम ताह ॥ ४७ ॥"

---

१ छाया—
क्षुते वस्त्रविलग्ने कथं कथं(कुत्र) भणिते झटिति कण्टके भग्ने ।
दृष्टे विलाडसर्पे न खलु गमनं सुन्दरं भवति ॥

२ तात्पर्यम्—
नखे नारितुरङ्गमयोः मुक्ताफलखड्गयोः ।
पानीयं येषां न अग्रलं, गतं गुरुत्वं तेषाम् ॥

३ जाहे न अगलां गिउ गुरुह तण कह ' इति घ-पाठः ।

अविद्धत्वात् पूर्णायुरावलिः सुतो भविष्यति। तच्छ्रुत्वा सा प्रमुदिता। ततः सुनक्षत्रे शुभलग्ने शुभवेलायां पुत्रो जातः। तस्य वर्धापनं कृतम्। कियद्दिनानन्तरं श्रेष्ठी सपुत्रः शुभमुहूर्ते 'अशोक'-नगरं प्रति प्रस्थितो मार्गे शकुनान् मार्गयति तावता एकः श्वाऽभक्ष्यमुखो दक्षिणाङ्गाद् वामपार्श्वे समागतः। श्रेष्ठिना शकुनविद् पृष्टः—कीदृशाः शकुनाः ?। तेनोक्तम्—वर्याः, नगरवासे सर्वसिद्धिर्भविष्यति। यत उक्तम्—

"गच्छतां च यदि श्वा स्याद्, दक्षिणाद् वामवर्तकः।
सर्वसिद्धिस्तदा नूनं, श्वानेन कथितं ध्रुवम् ॥ ४८ ॥"

ततः स एव श्वा कर्णौ कण्डूययामास। तदा शकुनविदा प्रोक्तम्—वर्याद् वर्यतरं भविष्यति। अधिकां सम्पदं पश्यामि, यतः—

"गच्छतां च तदा श्वानः, कर्णं कण्डूयते पुनः।
द्रव्यलाभं विजानीयात्, महत्त्वं च प्रजायते ॥ ४९ ॥"

ततः श्रेष्ठी शकुनग्रन्थिं बद्ध्वा सपरिवारोऽग्रे चलितः। क्रमेण 'शोकपुर' परिसरे प्राप्तः श्रेष्ठी प्राह—अत्र वाटिकायां भोजनं कृत्वा नगरे प्रवेशः क्रियते। यत उक्तम्—

"अभुक्त्वा न विशेद् ग्रामं, न गच्छेदेकको ऽध्वनि।
ग्राह्यो मार्गे न विश्रामः, पश्चोक्तं कार्यमाचरेत् ॥ ५० ॥"

---

१ 'गच्छता च यदा श्वानो, अमेध्यं भक्षयेद् यदि।
मिष्टान्नाशनपानानि, प्राप्नोति पुरुषो ध्रुवम् ॥'

इति ख-पाठो निम्नलिखितपद्याधिको वर्तते।

"धान्यपूर्णमुखो लाभं, विष्टापूर्णमुखः सुखम्।
सद्यो मांसमुखी राज्यं, दत्ते दृष्टः शुनीसुतः ॥ १ ॥"

२ 'चलति' इति क-पाठः।

अत्र बुद्धिचतुष्टयकथा। गुणाकरेण पञ्चशत्या एकैका बुद्धिर्गृहीता । सा सफला जाता । सा स्वयं वाच्या ।

ततः सहकारतले[1] स्थितो देवपूजां कृत्वा श्रेष्ठी भुक्तः क्षणं विश्रान्त[2]श्चिन्तयति—नगरमध्ये कथं व्यवसायो भविष्यति ? [3]नीवीं विना लाभो न स्यात् । यत उक्तं च—

"दुग्धं देयानुसारेण, कृपिर्मेघानुसारतः ।
लाभो [4]नीव्यनुसारेण, पुण्यं भावानुसारतः ॥ ५१ ॥"

वस्त्राद्याडम्बरं विना श्रीनगरे श्रीः कथं स्यात् ? । [5]उद्धारं केऽपि नार्पयन्ति । यतः—

"आडम्बराणि पूज्यन्ते, स्त्रीपु राजकुलेपु च ।
सभाया व्यवहारे च, वैरेपु [6]श्वसुरौकसि ॥ ५२ ॥"

तावता अकस्मात् आकाशवाणी जाता, यथा—

"[7]एँ बालक ए नगरनुं, राजा होसि जाणि ।
पनरे वरसे पुण्यबलइ, चिंता ही इम आणि ॥ ५३ ॥"

---

१ 'तरौ स्थित्वा' इति क-पाठः । २ 'विश्रान्तयति । आम्रं तुष्टाव यथा—
मञ्जरीभिः पिकनिकरं रज्ोभिरलिनं फलैश्च पान्थगणम् ।
मार्गे सहकार ! सततमुपकुर्वन् नन्द चिरकालम् ॥
इत्याशिषं दत्त्वा नगर' इति ख-पाठः ।

३ 'निमीयं' इति क-पाठः । ४ 'द्रव्यानु०' इति क-पाठः ।

५ 'उद्धारे कोऽपि नार्पयति' इति ख-घ-पाठः । ६ 'सुरसेषु च' इति क-पाठः ।

७ तात्पर्यम्—
अयं बालकोऽस्य नगरस्य राजा भविष्यति ( इति ) जानीहि ।
पञ्चदशवर्षे पुण्यबलेन चिन्तां हृदि मा आनय ॥

पितृभ्यां प्रोक्तम्—अस्य बालस्य राज्येनास्माकं प्रयोजनं नास्ति, किन्तु जीवितव्येन । यतः—

"द्वात्रिंशल्लक्षणो मर्त्यो, विनाऽऽयुर्नैव शस्यते ।
सरोवरं विना नीरं, पुष्पं परिमलं विना ॥ ५४ ॥"

एकः प्राङ् मृतः । द्वितीयस्याशा क्रियमाणाऽस्ति । परं सा दैवायत्ता । ततो द्वितीयवारं वृक्षादाकाशवाण्यभूद्, यथा—

"ए[1] बालक चिरं जीवसइ, होसइ धननी कोडि ।
सेवा करसइ रायसुअ[2], सेवक परि कर जोडि ॥ ५५ ॥"

ततो मातृपितरौ हृष्टौ । एषा दैववाणी घटते । उपरि विलोकितं, परं ताभ्यां देवः कोऽपि न दृष्टः । पासदत्तेनोक्तम्—प्रायः प्राणिनां पुण्यं विना देवदर्शनं न स्यात् । यथा—

"यस्य पुण्यं परोत्कृष्टं, प्रत्यक्षास्तस्य देवताः ।
कल्याणकेऽर्हतां देवाः, सेवाकरणतत्पराः ॥ ५६ ॥"

ततः श्रेष्ठिना पृष्टम्—कोऽयं देवः, किन्नामा? क[3]स्मादस्मदुपरि वात्सल्यम्? । देवः प्राह—अहं त्वत्पुत्रो यो मृतः । त्वदुक्तनमस्कारमहामन्त्रश्रवणेनाहं धरणेन्द्रपरिवारमध्ये देवो जातोऽत्र तिष्ठामि । मातुः पितुर्भ्रातुः स्नेहेन राज्यप्राप्तिं यावत् सान्निध्यं करिष्यामि । एष मद्भ्राता भाग्याधिकोऽस्ति । तेन युवाभ्यां कापि

---

१ तात्पर्यम्—
अयं बालकश्चिरं जीविष्यति भविष्यति धनस्य कोटिः ।
सेवां करिष्यन्ति राजसुताः सेवका इव करौ संयोज्य ॥

२ 'रायसुतं' इति ख-पाठः ।

३ 'दकस्मादुपरि' इति ख-पाठः ।

चिन्ता न कार्या। परं अस्य बालस्य मन्नाम्ना नाम देयं, यथा चिरञ्जीवी स्यात्। पित्रोक्तम्—तव किं नाम?। देव आह—**प्रियङ्कर** इति। ततः पुत्रस्य तदेव नाम दत्तम्। पित्रोक्तम्—एष बालको देवनाम्नाऽमरो भूयात्। पुनर्देवेनोक्तम्—विषमकार्ये सङ्कटे वाऽऽपतिते अत्रागत्य मत्स्थाने वृक्षाग्रे भोगः कार्यः। यथा युष्माकमहमाशां पूरयामि। यतः—

"भोगेन देवास्तुष्यन्ति, भोगेन व्यन्तराः सुराः।
भोगेन भूतप्रेताश्च, भोगो विघ्नविनाशकः॥ ५७॥"

ततः श्रेष्ठी विजयमुहूर्ते नगरे प्रवेशं करोति तदा दक्षिणः खरोऽभूत्। खराष्टकं तत्कृतम्[1]। श्रेष्ठी हृष्टः। यतः—

"निर्गमे वामतः श्रेष्ठः, प्रवेशे दक्षिणः शुभः।
पृष्ठतश्च न गन्तव्यं, सम्मुखः पथभञ्जकः॥ ५८॥
प्रथमे हानिदं शब्दं, द्वितीये सिद्धिदायकम्।
तृतीये च न गन्तव्यं, चतुर्थे स्त्रीसमागमः॥ ५९॥
पञ्चमे च भयं विन्द्यात्, षष्ठे तु क्लेशमेव च।
सप्तमे सफलं कार्यं, अष्टमे लाभमादिशेत्॥ ६०॥"

श्रेष्ठी सुशकुनैः स्वगृहे पुत्रसहितः प्राप्तः सुखेन धर्मकर्माणि करोति। प्रियङ्करः पुत्रो दिने दिने पितुर्मनोरथैः सह वर्धते॥

अस्मिन्नवसरे प्रियश्रीनाम्न्याः पितृगृहे निजभ्रातृविवाहमहोत्सवो जायमानोऽस्ति। तदाकारणाय भ्राता समागतः। सा सहर्षं स्वामातृधाम्नि भ्रात्रा सह गता। यतः—

---

१ 'खराष्टकं च तेन कृतम्' इति-घ-पाठः।

" वल्लभौ मातृपितरौ, वल्लभौ पतिपुत्रकौ ।
सहोदरश्च पञ्चैते, स्त्रीणां स्युर्हर्ष[1]कारणम् ॥ ६१ ॥"

तावता अन्या अपि भगिन्यः स्वस्वगृहात् समागताः समानाः सवाहनाः सपरिकराः सानुचरा दासदासीजनपरिवृताः स्वपुत्रयुताः परिहितदुकूला मुखसुरङ्गताम्बूलाः स्वर्णघटितहीरकजटितराखडीतिलकाः कस्तूरीप[2]त्रवल्लिराजितकपोलफलका जं[3]बाधिमहमहायमानमस्तकालका देशविख्यातमहेभ्यपतिका गजगतिकाः शोभा[4]यमानकर्णस्वर्णकुण्डला मुक्ताफलदीनारमालादिविभूषितकण्ठकन्दलाः सुवर्णरत्नमुद्रिकाकङ्कणाः सर्वकार्यचातुर्यप्रवीणा लहलहायमानत्रिसरचतुःसरहारस्वर्णनिगो( ? )दराः सर्वाङ्गाभरणसुन्दरा देवाङ्गनासोदराः सन्ति । पासदत्तस्य पत्नी पुनः सामान्यवस्त्रा जीर्णकञ्चुका जीर्णकौसुम्भोत्तरीया त्रपुमयकर्णकुण्डला ताम्बूलरहितमुखकमला मलीमसमस्तककुन्तला कङ्कणमुद्रिकाझञ्झरकमुक्तहस्तयुगला दारिद्र( द्र्य )कर्मकरणकर्कशकरा (स्वजनाकृतादरा) निर्धनवरा वराका गृहकोणके स्थिता लज्जायमाना अप्राप्तस्वजनमाना हृदये चिन्तयामास—जगन्मध्ये कस्याः कोऽपि वल्लभो नास्ति । यतः—

" वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः
पुष्पं पर्युषितं त्यजन्ति मधुपा भ्रष्टं नृपं सेवकाः ।
निर्द्रव्यं पुरुषं त्यजन्ति गणिका दग्धं वनान्तं मृगाः
सर्वः स्वार्थवशाज्जनोऽभिरमते नो कस्य को वल्लभः ॥ ६२ ॥"

---

१ 'हर्षस्य कारणं' इति ङ-पाठः । २ 'परिमलपत्र०' इति ख-पाठः । ३ 'जवादिम०' इति क-पाठः । ४ 'शोभमानाः' इति ख-पाठः । ५ 'काडम्बरमुक्त' इति क-पाठः ।

तस्या गौरवं कोऽपि न करोति । यतः—

"[1]गउरव कीजइ अलवडी, नवि को की(सी?)या न राम ।
गरथविहूणा माणसह, गादह चूंचा[2] नाम ॥ ६३ ॥"

तथाच—

"त्वमगस्तिरहं रामो, दृष्टोऽसि कदलीवने ।
आदरं शिथिलं कृत्वा, अद्य देवः समागतः ॥ ६४॥"

गुरुरुवाच—

"धनमर्जय काकुत्स्थ !, धनमूलमिदं जगत् ।
अन्तरं नैव पश्यामि, निर्धनस्य मृतस्य च ॥ ६५ ॥"

व्यवहारिपत्नीभिर्भगिनीभिः सा हसिता । विवाहमिलितलोका अपि कथयन्ति—भगिनीत्वे समानेऽपि पुण्यपापयोरन्तरं कियदस्ति ? । एषा रन्धनाद्येव कुर्वाणाऽस्ति । अपरा राज्ञीवदादेशं ददानाः सन्ति । यतः—

"न[3] करंति जे तव संजमं च ते तुल्लपाणिपायाणम् ।
पुरिसा समपुरिसाणं अवस्स पेसत्तणमुवेति ॥ ६६ ॥"

भगिनीकृतहास्यं दृष्ट्वा पासदत्तपत्नी मनसि दूना पराभवपदं प्राप्ता चिन्तयति—कुलगुणांश्च लोका न विलोकयन्ति, किन्तु धनमेव । यतः—

---

१ अयं क-पाठः । एतत्तात्पर्यं तु यथा—

गौरवं क्रियते अनुवरायाः(?) न काऽपि सीता न रामः ।
ग्रन्थविहीनस्य मानुषस्य गर्दभस्य चूचा(?) इति नाम ॥

२ 'बूचा' इति ख-पाठः ।

३ छाया—

न कुर्वन्ति ये तपः संयमं च ते तुल्यपाणिपादानाम् ।
पुरुषाः समपुरुषाणां अवश्यं प्रेष्यत्वमुपयान्ति ।

“ [1]जाई विज्जा रूवं तिन्नि वि निवडंतु कंदराविवरे ।
अत्थो च्चिअ परिवड्ढउ जेण गुणा पायडा हुंति ॥ ६७॥”

अहमभाग्या अकर्मिका पुण्यरहिता विवाहे भगिनीभिः परिहसिता तत् प्राग्भवकृतखण्डतपसः फलम् । यतः—

“[2]अद्धो षण्डा तप कीया, छतइ न दीधां दान ।
ते किम पामइ जीवडा, परभवि धन बहुमान ? ॥६८॥”

ततो विवाहे जाते सकर्मिका भगिन्यो भ्रा[3]तृदत्तदुकूलमहर्घ्याभरणाः सगौरवं कृतश्वशुरवासवस्त्रार्पणेन सन्तोषितसा[4]र्थागतदासाः स्वगृहे प्रहिताः । निर्धना अकर्मिका भगिनी बान्धवार्पितर[5]ङ्कहीनमानहीनस्थूलकशाटिका साधमानायितवराटिकाऽपि निजगृहे प्रेषिता । मार्गे सा गच्छन्ती मनस्यार्तध्यानं कुर्वाणा जीवं प्रति कथयति । यतः—

“[6]अरि मन अप्पउ खंच करि, चिंताजालि म पाडि ।
फल तेतुं पाणे पामीइ, जेतुं लिखिउ निलाडई ॥ ६९ ॥”

---

१ छाया—

जातिः विद्या रूपं त्रीण्यपि निपतन्तु कन्दराविवरे ।
अर्थ एव परिवर्धतां येन गुणाः प्रकटा भवन्ति ॥

२ तात्पर्यम्—

अर्धानि खण्डनानि तपांसि कृतानि ( स्वशक्तौ ) सत्यां न दत्तानि दानानि ।
ते कथं प्राप्नुवन्ति जीवाः परभवे धनबहुमानौ ? ॥

३ ‘पितृभ्यां दत्तदुकूल०’ इति क-पाठः । ४ ‘सहागतदासदासीः’ इति क-पाठः । ५ ‘रङ्कहीन०’ इति क-पाठः ।

६ तात्पर्यम्—

अरे मनः ! आत्मनि क्षान्तिं धर चिन्ताजालं मा पत ।
फलं तावत् प्राप्यते यावत् ते लिखितं ललाटे ॥

भ्रात्राऽपि कियदन्तरं कृतमस्ति ? । पुनर्मनो वालयति—
"[1]हे मन! तेतलुं म मागि, जे तुं देष परतणि ।
लहीयां लेखि लागि(भि),अणलहीउं लाभइ नही ॥७०॥"

अतः कारणात् मया भावेन कृतो धर्म एव सहोदरः स्नेहकारणं मम शरणं भवतु । यतः—

" विघटन्ते सुताः प्रायो, विघटन्ते च बान्धवाः ।
सर्वं विघटते विश्वे, धर्मात्मानौ तु निश्चलौ ॥ ७१ ॥ "

प्रियश्रीः श्याममुखा समागता । अश्रुबिन्दुभिः स्वहृदयं[2] सिञ्चयन्तीं किन्तु[3] कोपाग्निना ताम्यन्तीं भूमिकां विलोकयन्तीं भर्ता दृष्ट्वा प्राह—प्रिये! कस्मादद्य त्वं विषादवती दृश्यसे ? । तव केनापमानो दत्तः ? । केन पराभवः कृतः ? । सा किमपि न वक्ति । यस्मात् प्रायः कुलस्त्रियः पितृगृहा[4]वमाननं श्वशुरगृहे कथमपि न कथयन्ति । यतः—

"आरतः परतो वार्ता, न कुर्वन्ति कुलस्त्रियः ।
मध्यमाः कलहं गेहे, कारयन्ति परस्परम् ॥ ७२ ॥"

तथापि पत्या बलेन पृष्टा सती सर्वं वृत्तान्तं पितृगृहगतं कथितवती । यतः—

---

१ तात्पर्यम्—

हे मनः! तावत् मा याचस्व यावत् पश्यसि परस्मिन् ।
लिखितानि लेखे लभ्यन्ते अलिखितं लभ्यते नहि ॥

२ 'दयस्थलं' इति ख-पाठः । ३ 'किमु' इति ख-पाठः ।

४ 'गृहश्वशुरगृहापमानं कथ' इति ख-पाठः ।

"पतिः पूज्यः पतिर्देवः, पतिः स्वामी पतिर्गुरुः ।
सुखे दुःखे कुलस्त्रीणां, शरणं पतिरेव हि ॥ ७३ ॥"

भद्रे[1]! ज्ञातं दारिद्र(द्र्य)मेवापमानहेतुः । यतः—

"ईश्वरेण स्मरो दग्धो, लङ्का दग्धा हनूमता ।
न केनापि हि दारिद्र्यं, दग्धं सत्त्ववताऽप्यहो ! ॥७४॥"

ततः पतिना[2] (?) रुदन्ती सुन्दरी निवारिता । प्रिये ! दुःखं मनागपि न करणीयम् ।

"दीयते आत्मनो दोषो, न दोषो दीयते परे ।
न दोषः स्वामिमित्राणां, कर्मदोषो हि दीयते ॥ ७५ ॥"

स्वकर्मैव विचारणीयं, पुण्यमेव समाचरणीयं, दैवचक्रं चोपधारणीयम् । यतः—

"कृतकर्मक्षयो नास्ति, कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाशुभम् ॥ ७६ ॥"

प्रिये ! तदुपरि कोपस्त्वया न कार्यः, परगृहत्वात् । यस्माद् **दशवैकालिके** (अ० ५, उ० २, सू० २६) अप्युक्तं साधूनाम्—

"[3]वहुं परघरे अत्थि विविहं खाइमं साइमं ।
न तत्थ पंडिओ कुप्पे इच्छा दिज्ज परो न वा ॥ ७७ ॥"

---

१ 'भर्त्रा' इति ङ-पाठः । २ 'प्रियेण' इति ङ-पाठः ।

३ छाया—

वहु परगृहेऽस्ति विविधं खादिमं स्वादिमम् ।
न तत्र पण्डितः कुप्येत् इच्छया दद्यात् परो न वा ॥

तदनु सा प्रत्यहं नमस्कारो-पसर्गहरस्तवगुणन-देववन्दन-कायोत्सर्ग-प्रतिक्रमणादिपुण्यानि करोति। (यतः—)

"नवकार एक अक्खर पावं फेडेइ सत्त अयराणं।
पण्णासं च पएणं, सागरपणसयं समग्गेणं ॥ ७८ ॥"[1]

श्रेष्ठी तु विशेषतोऽष्टप्रकारपूजां करोति, यथा—

"[2]वरगंध १ धूवय २ चोक्खक्खएहिं ३ दीवेहिं ४ पवरकुसुमेहिं ५।
नेवेज्ज ६ फल ७ जलेहिं ८ (य) जिणपूआ अट्ठहा भणिया ॥७९॥[3]"

तत्समये श्रेष्ठिनः प्राचीनपुण्योदयो जातः। एकदा प्रियश्रीः नव्यगृहलिम्पनार्थं नगराद् बहिर्मृत्तिकाग्रहणार्थं गता। यावन्मृत्तिकां खनति सा तावता श्रेष्ठिपुण्यप्रकाशकं दारिद्र(द्य)नाशकं निधानं प्रकटीभूतम्। तथैव तया तत् मृत्तिकया प्रच्छाद्य स्वसदने समागत्य भर्तुर्निवेदितम्। श्रेष्ठिना तत्रागत्य तद् विलोक्य राज्ञे विज्ञप्तम्। राज्ञा स्वसेवकाः श्रेष्ठिना सह प्रेषिताः। तत्र तैः खानयित्वा निधानं राजसभायां समानीतम्। राज्ञोऽग्रे मुक्तम्। यथायुक्तं कुरुत। नृपेण मन्त्रिपुरोहितादयः पृष्टाः—किमत्र युक्तं कार्यमिति। तैः प्रोक्तम्—निधानं राजकीयमेव, किञ्चित्

---

१ छाया—

नमस्कारैकाक्षरः पापं स्फेटयति सप्तसागराणाम्।
पञ्चाशच्च पदेन सागरपञ्चशतं समग्रेण ॥

२ छाया—

वरगन्धधूपकचोक्षाक्षतैः दीपैः प्रवरकुसुमैः।
नैवेद्यफलजलैश्च जिनपूजाऽष्टधा भणिता ॥

३ इयं गाथा श्रीविजयचन्द्रकेवलिचरित्रे दृश्यते।

स्वल्पतरं अस्यार्पणीयम् । यावद् राजा तत्र धनग्रहणार्थं स्वकर-कमलं क्षिपति तावता मनुष्यवाणी जाता—राजानं छलयामि, राजपुत्रं कवलयामि, कुबुद्धिदायकं मन्त्रिणं गृह्णामि, पुरोहितं वा गृह्णामि ?। ततः सर्वे भीता दूरे स्थिताः । एतन्निधानं भूताधिष्ठितं वर्तते। एतस्यैवार्पणीयं सकलम् । एतस्यैव(वोढ्ढा?) धारकं भवतु । ततो नृपेण पासदत्तश्रेष्ठी पृष्टः—यदा निधानं त्वया दृष्टं तदा तत्र कोऽपि नाभूत् ?। केनापि दृष्टं श्रुतं वा ?। श्रेष्ठिनोक्तम्—स्वामिन् ! अहं जानामि, मद्भार्या च जानाति, तृतीयः कोऽपि नाभूत् । नृपः प्राह—तर्हि ममाग्रे त्वया कस्मात् कथितम् ?। स्वामिन् ! मम परधनग्रहणे नियमोऽस्ति । भूमिका सर्वाऽपि नरेन्द्रसत्का, तद्गतं निधानमपि, तेन मया न गृहीतम् । यतः—

"पतितं विस्मृतं नष्टं, स्थितं स्थापितमाहितम् ।
अदत्तं नाददीत स्वं, तृणमात्रमपि क्वचित् ॥ ८० ॥"

राजेन्द्र ! गृहस्थस्य व्यवहारशुद्धयै धनोपार्जनं युक्तम् । यतः—

"ववहारेण सुद्धेण, सुद्धो अत्थो पवड्ढइ ।
धन्नाइं देहपुत्तित्थी, धम्माणुट्ठाणसुद्धता ॥ ८१ ॥"

---

१ 'एतस्यैव सकलं समर्पणीयम्' इति ख-पाठः । २ 'परकीयं क्वचित् सुधीः' इति ख-पाठः । ३ 'वाऽर्थोपार्जनं' इति ख-पाठः ।

४ छाया—

व्यवहारेण शुद्धेन शुद्धोऽर्थः प्रवर्धते ।
धान्यानि देहपुत्रस्त्रियो धर्मानुष्ठानशुद्धता ॥

"सुद्धेणं चेव देहेणं, धम्मजुग्गो अ जायइ ।
जं जं कुणइ किच्चं, तु तं तं सफलं भवे ॥ ८२ ॥"

ततस्तन्नियमेन सन्तुष्टो राजा तस्मै निधिं समर्पयामास। तव पुण्येन निःसृतं तवैव भवतु । श्रेष्ठी चिन्तयति—इह लोके एव हि नियमफलं जातम् । यत उक्तम्—

"परार्थग्रहणे येषां, नियमः शुद्धचेतसाम् ।
अभ्यायान्ति श्रियस्तेषां, स्वयमेव स्वयंवराः ॥ ८३ ॥"

श्रेष्ठी निधानं लात्वा स्वयं गृहे प्राप्तः । धर्मफलमिदं ज्ञापितवान् । उक्तं च—

"योऽपि सोऽपि ध्रुवं ग्राह्यो, नियमः पुण्यकाङ्क्षिणा ।
अल्पोऽप्यनल्पलाभाय, कमलश्रेष्ठिनो यथा ॥ ८४ ॥"

अत्र कमलश्रेष्ठिकथा ॥ पासदत्तश्रेष्ठी तद्धनेन व्यवहारी जातः । नव्या आवासाः कारिताः । नव्याट्टानि कारितानि । व्यवसायं करोति । वणिक्पुत्रदासीदासमहिषीतुरङ्गमादिप्रमुखपरिवारो जातः । कुटुम्बमध्ये महत्त्वं चाभूत् । यतः—

"यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः
सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ८५॥"

ततः प्रियङ्करनामा पुत्रः प्रौढो जातः । तस्य लेखशालाकरणं[3] प्रारब्धं, तन्मुहूर्तो गृहीतः । यतः—

---

१ छाया—
शुद्धेन चैव देहेन धर्मयोग्यश्च जायते ।
यद् यत् करोति कृत्य तु तत् तत् सफलं भवेत् ॥

२ 'विवेकी' इति ख-पाठः । ३ 'रणे प्रारब्धा' इति क-पाठः ।

"शुभवेलाकृतं कार्यं, वृद्धिलाभाय जायते ।
सुक्षणे स्थापितो भूयात्, गौतमः सर्वलब्धिभृत् ॥८६॥"

ततः स्वजनगौरवनिमित्तं गृहे पकान्नानि क्रियन्ते स्म । तदाऽवसरज्ञा प्रियश्रीः[1] पतिं प्राह—विवाहसमये मम भगिनीभिर्हसितं, ममापमानं च दत्तम्, ताः सर्वा निमन्त्र्य स्वगृहे संभोज्य तासां परिवाराणां वस्त्रादिना यदि गौरवं क्रियते तदा वरम् । अयमेवावसरो वर्तते । यतः—

"अवसरि[2] जाणी उचिय करि अवसरि लही म भूल्हि ।
वारंवार[3] तुं जाणजे अवसरि लहिसि न मूल्हि ॥ ८७ ॥
कर[4]चुलुअपाणिएण वि अवसरदिन्नेण मूच्छिओ जियइ ।
पच्छा मुआण सुंदर[5] ! घटसयदिन्नेण किं तेण[6] ? ॥ ८८ ॥"

तासां पुनः स्वपुण्यफलं[7] दर्शयामि । श्रेष्ठी आह—प्रिये ! तासां किं गौरवं क्रियते तदा वरम् ? तासां उपरि कः कोपः कः स्नेहस्ताभिर्यथा कृतं तथा करिष्यामि । उक्तं च—

---

१ 'भव्यः' इति क-पाठः ।

२ तात्पर्यम्—

अवसरं ज्ञात्वोचितं कुरु अवसरं लब्ध्वा मा विस्मर ।
वारंवारं त्वं जानीहि अवसरो लप्स्यते न मूल्येन ॥

३ 'गऊं धन वली बाहुडि अवसरि न मलि बहु मुलि' इति ग-पाठः ।

४ छाया—

करचुलुकपानीयेनापि अवसरदत्तेन मूर्च्छितो जीवति ।
पश्चात् मृतानां सुन्दर ! घटशतदत्तेन किं तेन ? ॥

५ 'सुन्दरि' इति क-पाठः । ६ 'तस्स' इति क-पाठः । ७ 'निजपुण्य' इति ख-पाठः ।

"कृते प्रतिकृतिं कुर्यात्, [1]हंसिते प्रतिहासितम् ।
त्वया मे लुञ्चितौ पक्षौ, मया ते मुण्डितं शिरः ॥८९॥"

पत्नी आह—उत्तमानामपकारे कृतेऽपि गौरवकरणमेव युक्तम् । यतः—

"[2]छेहइ दीठइ छेह हीया ! म दापिसि आपणुं ।
करि बहुतेरउ नेह ओछा ते उमेटसइ ॥ ९० ॥"

अन्यच्च—

"कृतघ्ना बहवस्तुच्छा, लभ्यन्तेऽत्र कलौ जनाः ।
कृतज्ञा उत्तमाः स्तोका, अपकारे हितङ्कराः ॥ ९१ ॥"

ततः [3]श्रेष्ठी स्त्रीकथनात् तद्भगिनीनां निमन्त्रणाय स्वजनान् प्रेषयामास । ते तत्र प्राप्ताः । तेषां ताभिः प्रतिपत्तिः स्तोकैव कृता । तैर्निमन्त्रणं दत्तम् । ताः कथयन्ति—आजन्ममध्ये मद्भगिनीगृहं न दृष्टम्, अद्याकारणं केन हेतुना ? । तैरुक्तम्—पुत्रस्य लेखशालाकरणमस्ति, तदुत्सवे यूयमागच्छत । ताः प्राहुः—युष्माभिर्वाच्यम्, आगता एव ज्ञेयाः । तैर्भृशमाग्रहः कृतः—पुनः श्रेष्ठी अस्मान् प्रेषयिष्यति । तदा ताः प्रोचुः—पुनः प्रेषणं ज्ञातम्, दरिद्राणां गृहे भोजनार्थं गमने लोका अपि हास्यं कुर्वन्ति । यतः—

---

१ 'हिंसिते प्रतिहिंसितम्' इति ख-पाठः ।

२ तात्पर्यम्—

क्षये दृष्टे क्षयं हृदय ! मा दर्शयात्मनः ।
कृत्वा बहुतरं स्नेहमल्पास्ते उत्क्षिप्यन्ति ॥

३ 'श्रेष्ठिकथनाद् भगिनीनां' इति क-पाठः ।

"अन्नं शाकं गृहे[1] नास्ति, दधि दुग्धं च शर्करा[2] ।
ताम्बूलं[3] दृश्यते, नैव, भोजनं तस्य कीदृशम् ? ॥१२॥"

महेभ्यानां[4] तद्गृहगमने धनमेव लगति । ततस्ता उपहासं कृत्वा स्थिताः । ताभिर्न मानितम् । ते पश्चाद् वलिताः । ततः प्रियश्रीः प्रियं प्राह–यूयमेव स्वयं गच्छत । तदनु श्रेष्ठी तुरङ्गमे

---

१ 'घृतं' इति ख-पाठः । २ 'गुडा नहि' इति ख-पाठः । ३ 'खाद्यस्वाद्यादिकं नास्ति तद्गेहे भुज्यते किमु' इति ख-पाठः ।

४ एतत्स्थाने क-प्रत्यां तु पाठोऽयम्–"मानोऽपि नैव । इत्युक्त्वास्ते पश्चाद् ययुः । सर्वोऽपि तदुक्तवृत्तान्तः श्रेष्ठिश्रेष्ठिन्योरग्रे कथितः । तच्छ्रुत्वा श्रेष्ठी प्रिया प्रति उवाच–साम्प्रत ।किं कर्तव्यम् ?। प्रिया प्राह–स्वामिन् । महता आदरेण मम भगिन्यादयः आकारणीयाः । स्वसज्जनसमुदायं विना महोत्सवा न शोभन्ते । यतः—

"सरांसि तरुभिर्गेहं, स्त्रियाऽमात्येन पार्थिवः ।
स्वजनैरेव शोभन्ते, धर्मकर्ममहोत्सवाः ॥ १ ॥"

इत्युक्तः श्रेष्ठी पुनरपि स्वपुरुषान् प्रेषयामास । तैस्तत्र गत्वा महान् आदरः कृतः । ताभिर्मानितम् । यतः—

"भोजनं नावलोकन्ते, क्षणमात्रविनश्वरम् ।
ईहन्ते गुणिनो नित्यम्, आदरं स्वजनैः कृतम् ॥ १ ॥"

ताः सर्वा अपि नानालङ्कारविभूषिताङ्गभागा महताऽऽडम्बरेण प्रियश्रीगृहे समाजग्मुः । प्रियश्रिया स्वागतप्रश्नपूर्वं स्थानदानादिभिरत्यन्त तासां सम्मानश्चक्रे । प्राप्ते भोजनावसरे नानादेशीयादृष्टपूर्वसंस्कृतवस्तुपरिवेषणेन बहुमानपूर्वं भोजनमदायि । ता अत्यन्तं तुतुषुः । यतः—

"मिष्टा न शर्करा लोके, नामृतं न च गोस्तनी ।
इष्टमिष्टतरं लोके, भोजनं मानपूर्वकम् ॥ १ ॥"

कियद्भिर्दिनैर्महोत्सवेऽतिक्रान्ते नानाभरणदुकूलप्रदानेन सत्कृताः तद्विनयविवेकवचनचातुरीचमत्कृताः परस्परं वदन्ति स्म–"अहो एषाऽपि स्त्री वर्तते", अतः परं समानता ।

चटित्वा स्वयं निमन्त्रणाय तद्गृहे अगमत् । तुरङ्गमवस्त्राडम्बरं दृष्ट्वा ताः प्रतिपत्तिं चक्रुः । श्रेष्ठी सर्वानपि स्वजनान् बहुमानपूर्वकमाकार्य समागतः । सर्वेषामतिथीनां स्वस्वजनवर्गेभ्यः प्रतिपत्तिमादरं च कारयामास । यतः—

“ पानीयस्य रसः शैत्यं, भोजनस्यादरो रसः ।
आनुकूल्यं रसः स्त्रीणां, मित्रस्य वचनं रसः ॥ ९३ ॥”

सर्वेषामुत्तारका दत्ताः । तुरङ्गमवृषभादीनां स्वस्वजनवर्गेभ्यो गुडघृतखाणवारिप्रमुखं दापयामास । भगिनीनां प्रियश्रीः प्रतिपत्तिं कुर्वती कथयति—युष्माकमद्यात्र सामान्यगृहे नाचटिष्यति । भगिन्यो गृहाडम्बरवस्त्राभरणाडम्बरादि दृष्ट्वा हृदये विस्मयं चक्रुः, परं पुण्यभाग्ये को विस्मयः ? । यतः—

“ दाने तपसि शौर्ये च, विद्यायां विनये नये ।
विस्मयो न हि कर्तव्यो, बहुरत्ना वसुन्धरा ॥ ९४ ॥”

ततः श्रेष्ठी भोजनावसरे सर्वस्वजनानां स्थालीवर्तुलिकादि मण्डयित्वा शर्करापानीयं पूर्वं परिवेषयामास । ततः कुङ्कणकदलीफल-कोहलापाक-खारिक-खजुर-खांड-गुंदवडां-घेबर-चारबी-चारोली-जलेबी-टुप्पर[1]-कदमीरु(?)-द्राख-नीलीद्राख-दाडिमकुली-पनीस(?)-फीणी-पोउआ-वसोलां-वायम-पिस्तां-अषोड-सेलडी-शृङ्गाटकप्रमुखफलावली परिवेषिता । ततः खाजां-सुहाली-तिलसांकली-षसषस-सांकुचिम-मांडी-मुरकी-सेवइआलाडू[2]-दलीआलाडू-मोतीआलाडू-चारोलीलाडू-वाजणालाडू एवं[3] पक्कान्नानि परि-

१ ‘ टोपरा-दाडिम-द्राख-नीलीद्राख-फणस-फोणी-साटा-वरसोला-निमजां-पिसतां-सिता-अखोड-वदाम-सेलडी-भृंगाटिक-प्रमुख०’ इति ङ-पाठः ।

२ ‘ झगरिआलाडू ’ इत्यधिको ङ-पाठः । ३ ‘ प्रमुखागा ’ इति ङ-पाठः ।

वेषितानि । कासाञ्चित् स्त्रीणां प्रीसी लापसी, पांड सरसी स्त्री जिमइ हसी जीभे जाइ पिसी । कासाञ्चित् पापडी, किसिउ जिमइ जीभ बापडी । तदनु दूबली पांडिउं, सबलीइ छांडिउं हलूइ हलूइ सोहिउ, फूटरी स्त्रीइं धोयउ, चतुर स्त्रीनुं जोयउ, सरहरउ, भरहरउ, अणीआलउ, दूबलइ पेटि जाणे करि फोडी नीसरसिइ, जे जमिसइ तेह नइ घरनुं जिमण वीसरइ । एवंविधरायभोग-शालिसत्काः कूराः परिवेषिताः । ततो मुद्गदाली वानी पीली, नेत्री सीली परिवेषिता । ततः सद्यस्तापितं साक्षादमृतं घृतं परिवेषितम् । ततो वडां भीनां घणि घोलि, मरीच-मीचमी-घांडमी-पापड तल्या, मुह भणी हाथ वल्या, राइतां चिणा डोडी टीहूरां सालणे भाणां भरियां, पूरियां ते किस्यां तीपां कडूआं कसायलां मधुरां चतुःप्रकाराणि(रेण) दुर्जनना हीआ सरिपां तीपां, पाडोसणिनी जीभ सरिषां कडुआं, श्रीगुरुनां वचन सरिपां कसायलां, मायना स्नेह जिस्यां मधुरां, एवंविधशाकानि परिवे-षितानि । ततः प्रीस्यां घोलगल्यां,(बोले माथे पल्यां) घणे देसा-उरे भम्यां इणी परइ नथी जिम्यां । केषाञ्चिज्जनानां घणिंदे-धरदे-गजदेतक्रत्रयं परिवेषितम् । याभिर्हसितं तासां कूरमध्ये गजदेतक्रं स्वच्छं चन्द्रविम्बं परिवेषितम् । कूरः कण्डे लग्न इष्टवत् ताभिः धुंकारितम् । गले खरखरो जातः । तदा भगिन्या प्रोक्तम्—हे भगिन्यः ! अद्यतनं भोजनं सामान्यं मद्गृहसत्कं खरखरदस्ति । ताभिरुक्तम्—हे भगिनि ! भोजनं न, परं तव वचनम्, त्वया-ऽपमानफलं दर्शितम् । ततस्त्वया सुतरां दधीनि मुक्तानि ।

ततः कर्पूर-लविङ्ग-एला-केसरमिश्रताम्बूलदानं कृतम् । सर्वेषां भोजनगौरवेण चमत्कारो जातः । स्वजनैः कथितम्—अस्याः

भार्याया: पुण्यवत्या निधानं लब्धं राज्ञे दर्शितं, राज्ञा अस्यैव दत्तं, राज्ञो माननमस्ति। सर्वेऽपि स्वजनाः प्रोचुः—

अस्य श्रेष्ठिनः पुण्यं फलितम्। यतः—

"सुकुलजन्म विभूतिरनेकधा
प्रियसमागमसौख्यपरम्परा।
नृपकुले गुरुता विमलं यशो
भवति धर्मतरोः फलमीदृशम्॥ ९५॥"

पासदत्तेन सहेभ्यानां सर्वेषां स्वजनानां अपूर्ववस्त्राणि दत्तानि। प्रियश्रिया भगिनीनां पट्टकूलानि दत्तानि। तदनु प्रियङ्करपुत्रो महता महेन लेखशालायां पण्डितपार्श्वे अध्यापनाय मुक्तः। भगिन्या स्वभगिन्यः साग्रहं सादरं सस्नेहं कियद्दिनानि स्थापिताः, परं स्वसारः सर्वा लज्जिताः। अन्योन्यं कथयन्ति—उत्तममध्यमसहदन्तरं ज्ञेयम्। एषाऽपि स्त्री वर्तते। परं गम्भीरत्वं चातुर्यं कीदृशं वर्तते स्वजनेषु वात्सल्यं च ?। यतः—

"वाजिवारणलोहानां, काष्ठपाषाणवाससाम्।
नारीपुरुषतोयानां, अन्तरं महदन्तरम्॥ ९६॥"

अस्माभिः मुधा हास्यं कृतम्, यतः—

"हास्यान्महान्तो लघवो भवन्ति
हास्यस्य नाका (?) वनितां च मुक्तवान्।
ज्ञानं गतं क्षुल्लकस्य हास्यात्
हास्याच्च मित्राणि भवन्ति शत्रवः॥ ९७॥"

ताभिः स्वभगिनी क्षामिता। सा वक्ति—भवतीनां किमपि दूषणं नास्ति, मया प्राक्कृताशुभकर्मणः फलम्। ता आहुः—

अस्माभिः तदा मुधा धनगर्वेण त्वमपमानिता। अन्यैरपि कैश्चित् धनस्वजनसंयोगभोगपुत्राद्यहङ्कारो न कार्यः। उक्तं च—

" पूर्णोऽहमर्थैरिति मा प्रसीद
रिक्तोऽहमर्थैरिति मा विषीद।
रिक्तं च पूर्णं भरितं च रिक्तं
करिष्यतो नास्ति विधेर्विलम्बः॥ ९८॥

कल्लोलचपला लक्ष्मीः, सङ्गमाः स्वप्नसन्निभाः।
वात्याव्यतिकरोत्क्षिप्त–तूलतुल्यं च यौवनम्॥९९॥"

ततः श्रेष्ठिना सर्वे स्वजना विसर्जिताः स्वस्वस्थाने प्राप्ताः। प्रियङ्कर उद्यमेन शास्त्राणि पठति। पण्डितोऽपि तस्य विनय-गुणरञ्जितो हितेन विद्यां दत्ते।

" विनयेन विद्या ग्राह्या, पुष्कलेन धनेन वा।
अथवा विद्यया विद्या, चतुर्थं नैव कारणम्॥ १००॥
[1]सिंहासणे निसन्नं, सोवागं सेणिओ नरवरिंदो।
विज्जं मग्गइ पययं, इय साहुजणस्स सुअविणओ॥१०१॥"

स्तोकदिनैः सकलविद्याकुशलो जातः। यतः—

" प्रथमे वयसि ग्राह्या, विद्या सर्वात्मना बुधैः।
धनार्जनं द्वितीये च, तृतीये धर्मसङ्ग्रहः॥१०२॥"

तदनन्तरं श्रीगुरुसमीपे प्रियङ्करो धर्मशास्त्राणि पठति। गुरवोऽपि विनयगुणेन तं शिक्षयन्ति। यतः—

---

१ छाया—

सिंहासने निषण्णं श्वपाकं श्रेणिको नरवरेन्द्रः।
विद्यां मार्गयति प्रकृतमिति साधुजनस्य श्रुतविनयः॥

" विद्या भवन्ति विनयाद् विनयाच्च वित्तं
नृणां भवेच्च विनयान्निजकार्यसिद्धिः ।
धर्मो यशश्च विनयाद् विनयात् सुबुद्धिः
ये शत्रवोऽपि विनयात् सुहृदो भवन्ति ॥१०३॥"

दशवैकालिके (अ० ९, उ० २, मू० १–२ ) अप्युक्तम्—

" मूलाओ खंधप्पभवो दुमस्स
खंधाओ पच्छा समुविंति साहा ।
साहप्पसाहा विरुहंति पत्ता
तओ सि पुप्फं च फलं रसो य ॥ १०४ ॥
एवं धम्मस्स विणओ, मूलं परमो अ से मुक्खो ।
जेण कित्तिं सुअं सिग्घं, नीसेसं चाभिगच्छइ ॥१०५॥"

पितरस्त एव ये स्वपुत्रबालयेऽपि आणयन्ति । यतः—

" रूपयौवनसम्पन्ना, विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते, निर्गन्धा इव किंशुकाः ॥ १०६ ॥
पण्डितेषु गुणाः सर्वे, मूर्खे दोषाश्च केवलाः ।
तस्मान्मूर्खसहस्रेण, प्राज्ञ एको न लभ्यते ॥ १०७ ॥
विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।

---

१ छाया—

मूलात् स्कन्धप्रभवो द्रुमस्य स्कन्धात् पश्चात् समुपयान्ति शाखाः ।
शाखाप्रशाखा विरोहन्ति पत्राणि ततस्तस्य पुष्पं च फलं रसश्च ॥
एवं धर्मस्य विनयो मूलं परमश्च तस्य मोक्षः ।
येन कीर्तिं श्रुतं शीघ्रं निःशेषं चाभिगच्छति ॥

विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं
विद्या राजसु पूज्यते नहि धनं विद्याविहीनः पशुः ॥ १०८॥
ग्रासे महेभ्यवर्गेऽपि, चारित्री वर्णप्रश्निते (?)।
मूर्खपुत्रोऽवदत् तत्र, द्वारस्थाने कपाटकम् ॥ १०९ ॥"

प्रियङ्करः सम्यक्त्व-रत्नत्रय-नवतत्त्व-द्वादशव्रतविन्महाश्रावको जातः । गुरुभिरुक्तम्—महानुभाग ! लघुत्वेऽपि धर्मः कार्यः। यतः—

"[3]दीहा जंति वलंति नहु जिम गिरिनिज्झरणाइं।
लहुअ लगइ जीव! धम्म करि सुइ निचिंतो कांइ?॥११०॥
[5]जरा जाव न पीडेइ, वाही जाव न वड्ढइ।
जावंदिया न हायिंति, ताव धम्मं समायरे ॥१११॥"

ततः प्रियङ्करः प्रत्यहं सामायिक-पूजा-प्रत्याख्यान-दया-दान-पुण्यानि करोति। श्रीगुरुभिस्तस्य धर्मश्रद्धां ज्ञात्वा उपसर्गहरस्य स्तवस्याम्नायाः कथिताः। 'उवसग्गहरं'स्तवनं मौनेन पवित्रीभूय प्राङ्मुखमेकान्ते गुणनीयम्। एतत्स्तवनमध्ये श्रीभद्रबाहु-श्रुतकेवलिना महामन्त्रा अनेके गोपिताः सन्ति येन धरणेन्द्र-

---

१ 'पूजिता' इति ङ-पाठः। २ 'व्रतादिप्रतिपत्त्या' इति घ–पाठः।

३ तात्पर्यम्—

दीर्घाणि यान्ति वलन्ति न खलु यथा गिरिनिर्झरणानि।
लाघवं यावत् जीव ! धर्मं कुरु स्वपिषि निश्चिन्तः कथम् ? ॥

४ 'पुण्य' इति घ–पाठः।

५ छाया—

जरा यावन्न पीडयति व्याधिर्यावन्न वर्धते।
यावदिन्द्रियाणि न हीयन्ते तावद् धर्मं समाचरेत् ॥

पद्मावती-वैरोट्यादयः सान्निध्यं कुर्वन्ति। अनेनाखण्ड १२००० गुणितेन सर्वकार्याणि सिध्यन्ति। दुष्टग्रह-भूत-प्रेत-शाकिनी-डाकिनी-मारी-ति-रोग-जला-ऽनल-व्यन्तर-दुष्टज्वर-विषधर-विष-चौर-राज-रणादिभयानि स्तवनस्मरणाद् दूरतो यान्ति। सुख-सन्तानसमृद्धिसंयोगमृतवत्सापुत्रप्रा[1]णदकार्याणि स्युः। उक्तं च—

" सर्वोपसर्गहरणं स्तवनं पुमान् यो
ध्यायेत् सदा भवति तस्य हि कार्यसिद्धिः।
दुष्टग्रहज्वररिपूग्ररोगपीडा
नाशं प्रयान्ति वनिताः ससुता भवन्ति ॥ ११२ ॥

उपसर्गहरं स्तोत्रं, ध्यातव्यं भा[2]विना त्वया।
कष्टे च प्रथमा गाथा, गुणनीया विशेषतः ॥ ११३ ॥"

तदनु प्रियङ्करेणोपसर्गहरस्तवनगुणननियमो गृहीतः। स प्रत्यहं गुणयति। नियमभङ्गे षड्विकृतित्यागं करोति। तस्य नित्यस्मरणात् सिद्धम[3]न्त्रसिद्धिरभूत्। यद् यत् कार्यं करोति तत् तत् सफलं स्यात्। पुत्रप्रियङ्करः स्वपितुः कथयामास—तातपादाः! यूयं धर्ममेव कुरुत। यत उत्तराध्ययने प्रोक्तम्—

" जा[4] जा वच्चइ रयणी, न सा पडिनियत्तइ।
धम्मं च कुणमाणस्स, सहला जंति राईओ ॥ ११४ ॥"

---

१ 'प्रापणकार्याणि' इति ड-पाठः। २ 'भावतः' इति ड-पाठः।

३ 'मन्त्रसदृशमभूत्' इति ड-पाठः।

४ छाया—

या या व्रजति रजनी न सा प्रतिनिवर्तते।
धर्मं च कुर्वतः सफला यान्ति राज्यः ॥

अहं गृहभारं निर्वाहयिष्यामि । व्यवसायं करिष्यामि । पुत्रः स एव यः स्वपितुश्चिन्तामुत्तारयति । उक्तं च—

" एकेनापि सुपुत्रेण, सिंही स्वपिति निर्भरम् ।
सहैव दशभिः पुत्रै-र्भारं वहति गर्दभी ॥ ११५ ॥"

एकदा पित्रा प्रियङ्करः आसन्ने '[1]श्रीवास'ग्रामे उद्ग्राहणिकार्थं प्रेषितः । तां कृत्वा सन्ध्यायां पश्चाद् वलन् (मानः ?) स भिल्लैर्बद्धः, [2]श्रीपर्वते दुर्गे स्वस्थाने नीतः । स्वसीमालराज्ञे ज्ञापितः । स कारायां क्षेपितः । ततस्तस्य पितरौ सायं पुत्रमार्गं विलोकयतः स । हे पुत्र ! त्वमद्यैव प्रेपितः नागतः, कस्मात् रुष्टः ?, केनापि पराभूतो वा ? । वत्स ! अद्यागच्छ स्वं दर्शय । कदा अतः परं त्वां कस्मिन्नपि कार्ये न प्रेषयिष्यावः । माता प्राह—वत्स ! प्रियङ्कर ! मम त्वमेवैकः पुत्रोऽसि । दुःखेन पालितोऽसि इष्टः कान्तो मनोज्ञो मनोहरणो [3]विश्वसंमतो वहुमत आभरणकरण्डिकासमानरत्नभूतः अस्माकं जीवितोल्लासको हृदयानन्दनः अम्बरपुष्पमिव दुर्लभः स्वप्नेऽपि, किं पुनर्दर्शनेनापि इति पुत्रगुणान् गृह्णन्ती विलापान् करोति । यथा—

" [4]अवरं सव्वं पि दुहं जणाण कालंतरेण वीसरइ ।
वल्लहवियोगदुक्खं मरणेण विणा न वीसरइ ॥ ११६ ॥"

---

१ 'श्रीनामग्रामे' इति ड-पाठः । २ 'श्रीपर्वतदुर्गे' इति ङ-पाठः ।
३ 'विश्वस्तः सम्मतः वहुमतः अनुमतः आभरण०' इति ड—पाठः ।
४ छाया—

अपरं सर्वमपि दुःखं जनानां कालान्तरेण विस्मर्यते ।
वल्लभवियोगदुःखं मरणेन विना न विस्मर्यते ॥

अथ पुत्रं विना गृहं शून्यमिव दृश्यते । उक्तं च—

"अपुत्रस्य गृहं शून्यं, दिशः शून्या अबान्धवाः ।
मूर्खस्य हृदयं शून्यं, सर्वशून्यं दरिद्रता ॥ ११७ ॥"

तावता केनाप्युक्तम्—श्रेष्ठिन् ! त्वत्पुत्रं विबध्य भिल्लाः श्रीपर्वते लात्वा गताः । तत् श्रुत्वा पितरौ दुःखिनौ जातौ । विशेषान्नमस्कारोपसर्गहरस्तवनगुणनभोगकरणादिपुण्यपरौ जातौ । यतः—

"वने रणे शत्रुजलाग्निमध्ये
महार्णवे पर्वतमस्तके वा ।
सुप्तं प्रमत्तं विषमस्थितं वा
रक्षन्ति पुण्यानि पुराकृतानि ॥ ११८ ॥"

तदा श्रीपासदत्तस्य देवतयोक्तं वचः स्मृतम् । ततः अगुरु-कर्पूर-कस्तूरिकाप्रमुखभोगं लात्वा राजवाटिकामध्ये देवताधिष्ठिताम्रवृक्षस्थाने स भोगं कृतवान् । तेनोक्तम्—भो देव ! त्वया पुत्रस्य राज्यं कथितमभूत् । प्रत्युत नष्टं जातम् । न मृषाभाषिणो देवाः । यतः—

"प्रतिपन्नानि महतां, युगान्तेऽपि चलन्ति न ।
अगस्तिवचनैर्बद्धो, विन्ध्योऽद्यापि न वर्धते[1] ॥ ११९ ॥"

कष्टे च त्वमेवास्माकं शरणम् । देवः प्रोचे— श्रेष्ठिन् ! चिन्तां मा कुरु । देवसत्का वागभूद् यथा—

---

१ 'वृद्धोऽद्यापि न वर्धते' इति क-पाठः ।

"सुण[1] रे पासा ! मुझ वचनविलासा
मति मुकिसि तु मुखि नीसासा ।
देव हूया प्रियंकरदासा
आवसि परणी पंचमि वासा ॥ १२० ॥"

इमां देववाणीं श्रुत्वा श्रेष्ठी हृष्टो गृहेऽगात् । भार्यायै ज्ञापितम् । साऽपि सहर्षाऽभूत् । इतः श्रीपर्वते प्रियङ्करस्य यज्जातं तत् शृणुत—ततः प्रातः प्रियङ्करः सीमालराज्ञा पल्लीपतिना आकार्य पृष्टः—श्रावकस्त्वम् ? स आह—'अशोक'नगरवासी निर्धनो वणिक् आसन्नग्रामे पोट्टलकं कृत्वा निर्वाहं करोमि । मत्पिता वृद्धः । मदेकपुत्रा माता । अहं न जाने केनापि कारणेन त्वज्जनैर्बद्ध्वा आनीतः । नृपः प्राह—अशोकनगरस्वामी अशोकचन्द्रो राजा अस्मद्वैरी वर्तते, तेन तन्नगरवासिनः सर्वेऽपि वैरिण एव । अपरं मज्जनैर्मन्त्रिपुत्रस्य ग्रामं गतस्य मार्गे बद्धोऽभूत् । परं स हस्ते न चटितः; तत्स्थाने त्वं बद्धः । प्रियङ्करः प्राह—स्वामिन् ! मम वराकस्य बन्धनेन किम् ? मां नगरे कोऽपि नोपलक्षयति । रोगोऽन्यस्य, सेकप्रदानमन्यस्य । चक्षुर्दुःखतः कर्णौ वध्येते । रावणेनापराधः कृतः, कपिभिः समुद्रो बद्धः । राज्ञा सह वैरं, अहं निरपराधो वणिग् बद्धः । उक्तं च—

"अन्नेहिं[2] कयवराहे, अन्नस्स पडंति मत्थए णत्था ।
रावणकएवराहे, कविहिं[3] बद्धो समुद्दो य ॥ १२१ ॥"

---

१ तात्पर्यम्—
शृणु रे पास ! मम वचनविलासान् मा मुञ्च त्वं मुखे निःश्वासान् ।
देवा अभूवन् प्रियङ्करदासाः आगमिष्यति परिणीय पञ्चमे वासरे ॥

२ छाया—
अन्यैः कृतापराधे अन्यस्य पतन्ति मस्तकेऽनर्थाः ।
रावणकृतापराधे कपिभिर्बद्धः समुद्रश्च ॥

३ 'गिरीहिं' इति क–पाठः ।

तद्वचनचातुर्येण पल्लीपतिर्विस्मितः कथयति—कुमार ! त्वां मुञ्चामि यदि त्वं मत्कथितं करोषि । कुमारेणोक्तम्—तत् किम् ? राजाऽऽह—मत्सेवकान् त्वद्गृहे रक्षोवृत्त्या स्थापय दिनसप्तकं यथा ते तत्र स्थिताः राजपुत्रं मन्त्रिपुत्रं वा यदृच्छया अत्रानयन्ति, स्ववैरं वालयामि । कुमारः प्राह—अकर्तव्यं सर्वथा न करिष्यामि । यद् भवति तद् भवतु । यतः—

"अकर्तव्यं न कर्तव्यं, प्राणैः कण्ठगतैरपि ।
सुकर्तव्यं तु कर्तव्यं, प्राणैः कण्ठगतैरपि ॥ १२२ ॥"

राज्ञो विरुद्धकरणे जीवितव्यं न स्यात् । यतः—

"देशग्रामनृपादीनां, विरुद्धानि सृजन्ति ये ।
इहैव बन्धनं क्लेशं, मरणं प्राप्नुवन्ति ते ॥ १२३ ॥"

राजा रुष्टः सेवकान् समादिशत्—एनं [1] खो(पो)डके क्षिपत । ततस्तैः खो(पो)डके क्षिप्तः । तत्परितो रक्षकाः स्थिताः । कुमारश्चिन्तयति—श्रीगुरुभिरुक्तमभूद्-विषमसङ्कटे पतिते विशेषत उपसर्गहरस्तवनं गुणनीयम् । ततस्तेनैकचित्तेन 'उवसग्गहरं पासं'-इति स्तवनं १२ सहस्रवारं गुणितम् । तदवसरे वैरिनृपस्य मनो वलितम् । एष वराको मुच्यते । अनेन स्थापितेनापि किं स्यात् ? तदा तत्सभायां ज्ञानवान् विद्यासिद्धः कोऽपि समागत आशीर्वचनं दत्त्वोपविष्टः । राज्ञा पृष्टं स्वागतम्—स प्राह—

"सौम्यदृष्ट्या नरेन्द्राणां, प्रजानां हितवाक्यतः ।
आत्मनश्चित्तवात्सल्यात्, सुखितोऽस्मि निरन्तरम् ॥१२४॥"

---

१ खोडकं काष्ठमयी कारा मरुदेशप्रसिद्धा ।

राज्ञा पुनः पृष्टः— किं किं वेत्सि ?। तेनोक्तम्—

"जीवितं मरणं नृणां, गमनागमनं तथा ।
रोगं योगं धनं क्लेशं, सुखं दुःखं शुभाशुभम् ॥ १२५॥"

पल्लीपतिः प्राह–तर्हि त्वं कथय–अस्मद्वैरिणः अशोकचन्द्र-नृपस्य कदा मरणं भविष्यतीति येनास्मदेशः सर्वो गृहीतः । सिद्धेनोक्तम्–एकान्ते कथयिष्यामि। राजा प्राह–अत्र सर्वेऽप्याप्ता एव सन्ति, त्वं वद । सिद्ध आह—

"षट्कर्णो भिद्यते मन्त्रः, चतुष्कर्णो न भिद्यते ।
द्विकर्णस्य तु मन्त्रस्य, ब्रह्माऽप्यन्तं न गच्छति ॥ १२६ ॥"

ततो नृपकर्णे प्रविश्य तेनोक्तं नृपमरणस्वरूपं, नात्र सन्देहः। ततो राज्ञा प्रकटमेव पृष्टः–तत्पट्टे क उपवेक्ष्यति ? तेनोक्त-म्–क्षणमेकं ध्यात्वा–राजपुत्राणां राज्यं न भविष्यति । अस्य गोत्रेऽपि राज्यमतःपरं न भविष्यति । किन्तु यस्त्वया पुण्याधिकः खो(षो)डके क्षिप्तोऽस्ति तस्यैव राज्यं देवतादत्तं भविष्यति । नृपः प्राह–हे सिद्ध ! किमसम्बद्धं भाषसे ? ज्ञातं तव ज्ञानम् । अस्य राज्यधनेन किम् ? निर्गत एष निर्धनो वणिक् अस्य नामापि न ज्ञातम्। यस्य पुण्यं स्यात् तस्य सर्वत्र ज्ञायते । उक्तं च—

"विश्वेऽपि ज्ञायते नाम, केषां पुण्यवतां स्फुटम् ।
नल-पाण्डव रामाणां, केषां गेहेऽपि नो भवेत् ? ॥१२७॥"

सिद्ध आह—अत्र सन्देहो न कार्यः। चेद् न मन्यसे तदा प्रत्ययं वदामि–कल्ये यत् त्वया भुक्तं तत् कथयामि । राजाऽऽह–त्वं वद । ततः सिद्धः प्राह—

"[1]मोदका मण्डकाः पञ्च, घृतखण्डविमिश्रिताः ।
मुद्गमाषवटी चैव, तक्रं ताम्बूलकं तथा ॥ १२८ ॥"

एष श्लोकः पठितः । राज्ञा मानितम् । कैश्चित् सभामध्ये प्रोक्तम्—चूडामणिका गतवार्तां विन्दन्ति, न पुनरागामिकीम् । भूयो भूपेन पृष्टः—अहमद्य किं भोजनं करिष्यामि ? । सिद्धेनोक्तम्—मुद्गपानीयम्, तदपि सन्ध्यायाम् । राज्ञोक्तम्—इदमप्यसत्यम् । मम शरीरे आरोग्यं विद्यते । ज्वरादि किमपि नास्ति । अथवा अधुनैव सर्वं ज्ञास्यते । सभालोकस्य विस्मयो जातः । सिद्ध आह—यदि स्वामिन् ! एतत् सत्यं मिलितं तदा अनेनाभिज्ञानेन अस्य प्रियङ्करस्य राज्यं भविष्यतीति ज्ञेयम् । नृप आह—तद् कस्मिन् दिने ? । सिद्धः प्राह—

"माघमासे सिते पक्षे, पूर्णायां गुरुवासरे ।
पुष्ये प्रियङ्करो राजा, भविष्यति न संशयः ॥१२९॥"

राज्ञा तत्क्षणात् प्रियङ्करो मोचितः स्वगृहे सारवस्त्रैः सत्कृतः । यतः—

"[2]कप्पड पगि पगि लहइं, के कंचणनी रासि ।
रायमाण केता लहइ, के न लहइ सावासि ॥ १३० ॥"

ततो राज्ञा स्वपार्श्वे स्थापितः । वह्वीं वेलां सिद्धेन सह गोष्ठीः कृत्वा सभा विसर्जिता । राजा गृहमध्ये समागत्य दन्त-

---

१ 'मोक्षका' इति ङ-पाठः ।

२ तात्पर्यम्—
कर्पटानि पदे पदे लभन्ते केऽपि काञ्चनस्य राशिम् ।
राजमानं केचिल्लभन्ते को न लभते शुभाशीः (?) ॥

धावनं कृतवान् । ततः स्नानं कृतम् । तावता अकस्मात् शिरोऽर्तिर्जाता । आन्धसिकः प्रार्थयति—राजन् ! भोजनाय प्रागुत्सुरो जातोऽस्ति । पादौ अवधार्यताम् । राजा प्राह—भोजनं क्षणान्तरे करिष्यामि । मम शिरो दुःख्यमानमस्ति । पुनर्मुखेऽपि तेनाकस्मात् कलमलो जातः सनत्कुमारचक्रवर्तिवत् । उक्तं च—

"[1]थोवेण वि सप्पुरिसा सणंकुमारुव्व केइ बुज्झंति ।
देहे खणपरिहाणि जं किर देवेहिं से कहियं ॥ १३१ ॥"

पल्यङ्के ततः सुप्तः । निद्रा समागता । सन्ध्यायामुत्थितः । तथापि तादृग् वपुःपाटवं नास्ति । मन्त्री तदाकर्ण्य तत्रागतो वक्ति—सर्वथा लङ्घनं न कार्यम् । यतः—

"ज्वरेऽपि लङ्घनं नैव, कर्तव्यं युक्तिलङ्घनम् ।
ये गुणा लङ्घने प्रोक्ता—स्ते गुणा लघुभोजने ॥ १३२ ॥"

तेन मुद्गपानीयं ग्राह्यम् । यतः—

"त्रिदोषशमनं हृद्यं, रेचकं गात्रशोधकम् ।
शुष्कं च नीरसं तिक्तं, मुद्गवारि ज्वरापहम् ॥ १३३ ॥"

ततो राज्ञा रुचिं विनाऽपि मुद्गपानीयं भेषजपानीयं च गृहीतम् । वैद्येनोपरि शिरोऽर्तिपित्तशमनी एला समर्पिता । यतः—

"एला तिक्तोष्णलघ्वी स्यात्, कफवायुविषप्रणुत् ।
वस्तिकण्डुरुजो हन्ति, मुखमस्तकशोधिनी ॥ १३४ ॥"

---

1 छाया—

स्तोकेनापि सत्पुरुषाः सनत्कुमार इव केचिद् बुध्यन्ते ।
देहे क्षणपरिहाणिः तत् किल देवैः तस्य कथितम् ॥

द्वितीयदिने समाधिसम्पन्नो राजा सभायामुपविष्टो वक्ति–सिद्धवचनं सत्यं जातम् । ततो मन्त्रीश्वरस्वकुटुम्बस्वजनादीनाकार्य राजा विचारं करोति–एष कुमार आत्मभाग्यं न जानाति । एतस्य राज्यमवश्यं भविष्यति । तेन मत्पुत्री वसुमती नाम्नी अस्मै दीयते, यदि कुटुम्बस्य चित्ते आयाति । पश्चादेष आत्मनः सुखकारी स्यात्, आत्मसन्तानिनोऽपि सुखिनः स्युः । ततः सर्वैरप्युक्तम्–युक्तियुक्तमिदं वचनम् । ततः पल्लीशेन शुभवेलायां स्वकन्यारत्नस्य अनिच्छतोऽपि पाणिग्रहणं कारितम् । धनतुरङ्गमवस्त्रादि दत्तम् । आवासे स्थितः प्रियासहितश्चिन्तयति–एष सर्वोऽपि स्तवमहिमा । यतः—

" सम्पदो विपदः स्थाने, पाणिग्रहश्च खो(पो)डके[1] ।
अपमानपदे मानं सर्वं, पुण्यफलं त्विदम् ॥ १३५ ॥ "

ततः प्रियङ्करः सपत्नीको वैरिभयाद् रात्रौ स्वसेवकैः सह श्री'अशोक'पुरे पञ्चम्यां राज्ञा प्रापितः । पित्रोः प्रणामं कृतवान् कुमारः सवधूकः । पितरौ हृष्टौ । देववचः सत्यमभूत् । कुमारस्य वसुमती प्रथमा प्रिया जाता ॥ १ ॥

कुमारः प्रियङ्करः सर्वव्यवसायचतुरः कुटुम्बभारं निर्वाहयामास । पिता तु पुण्यान्येव करोति, विनीतपुत्रप्रसादात् । यतः—

" ते पुत्रा ये पितुर्भक्ताः, स पिता यस्तु पोषकः ।
तन्मित्रं यत्र विश्वासः, सा भार्या यत्र निर्वृतिः ॥१३६॥ "

---

१ ' खोडकेऽत्र विवादकः ' इति ङ-पाठः ।

अन्यदा प्रियङ्करः श्रीदेवगुरुस्मरणनमस्कारोपसर्गहरगुणनादि विशेषध्यानं कृत्वा सुप्तः । तदा रात्रौ निशीथात् परतो महाश्चर्यकारकं स्वप्नं स लब्धवान् । जागरितो नमस्कारानेव गुणयति । यतः—

"जिणसासणस्स सारो, चउदसपुव्वाण जो समुद्धारो ।[1]
जस्स मणे नवकारो, संसारो तस्स किं कुणइ ? ॥ १३७ ॥
एसो मंगलनिलओ, दुहविलओ सयलसंतिजणओ य ।
नवकारपरममंतो चिंतिअमित्तो सुहं देइ ॥ १३८ ॥"[2]

प्राग् वृद्धमुखात् श्रुतम्—स्वप्नं प्रेक्ष्य निद्रा न कार्या । उक्तं च विवेकविलासे (स० १, श्लो० १४)—

"सुस्वप्नं[3] प्रेक्ष्य न स्वप्यं, कथ्यमह्नि च सद्गुरोः ।
दुःस्वप्नं पुनरालोक्य, कार्यः प्रोक्तविपर्ययः ॥ १३९ ॥"

प्रातः स्वपितुरग्रे स्वप्नोपालाभस्वरूपं प्रोवाच—यथा, मया स्वशरीरादन्त्रजालं कृष्ट्वा पृथक् पृथक् कृतैः स्वैरन्त्रै'रशोक'नगरं शनैः शनैर्वेष्टितम् । ततश्च स्वशरीरं वैश्वानरे जाज्वल्यमानं दृष्ट्वा

---

१ छाया—

जिनशासनस्य सारः चतुर्दशपूर्वाणां यः समुद्धारः ।
यस्य मनसि नमस्कारः संसारस्तस्य किं करोति ? ॥
एष मङ्गलनिलयो दुःखविलयः सकलशान्तिजनकश्च ।
नमस्कारपरममन्त्रः चिन्तितमात्रं सुखं ददाति ।

२ "नमस्कारसमो मन्त्रः, शत्रुञ्जयसमो गिरिः ।
गजेन्द्रपदजं नीरं, निर्द्वन्द्व जगतीतले ॥" इत्यधिको घ-पाठः ।

३ 'स्वप्नं प्रेक्ष्य न तु स्वप्यात्' इति क-पाठः ।

यावज्जलेनोपशमति तावज्जागरितः। इत्येतस्य स्वमस्य कीदृशं फलं भविष्यति ?। पासदत्तः प्राह— त्रिविक्रमोपाध्यायपार्श्वे गत्वा पृच्छ। अन्यस्य कस्याप्यग्रे न वाच्यम्। स शास्त्रज्ञो वर्तते। यतः—

“पात्रे त्यागी गुणे रागी, भोगी परिजनैः सह।
शास्त्रे बोद्धा रणे योद्धा, पुरुषः पंञ्चलक्षणः ॥ १४० ॥”

ततः प्रियङ्करकुमार उपाध्यायगृहे गतः। तत्पुत्रद्वयं शास्त्राध्यायिनं तत्र दृष्टम्। तत्पार्श्वे पृष्टम्—उपाध्यायः क्वास्ति ?। वृद्धपुत्रेणोक्तम्—

“मृतका यत्र जीवन्ति, न जीवा उच्छ्वसन्ति च।
स्वगोत्रकलहो यत्र, तद्गृहेऽस्ति द्विजोत्तमः ॥ १४१ ॥”

ततः प्रियङ्करः स्वबुद्ध्या लोहकारगृहं ज्ञात्वा गतः। अत्राप्युक्तं करपत्रकं सज्जं कारयित्वा अधुनैव स्वगृहे गतः। ततः पश्चादागतो लघुपुत्रं पृष्टवान्। तेनोक्तम्—

“जडानां सङ्गतिर्यत्र, [2]प्रीतिश्च जडजैः सह।
उपकारि वनाधारं, मत्पिता तत्र विद्यते ॥ १४२ ॥”

कुमारस्तयोर्वैदग्ध्यं ज्ञात्वा चमत्कृतः। किं सरोवरे गतोऽस्ति ? इति तदुक्तं श्रुत्वा तत्पुत्रावपि चमत्कृतौ। कुमारः सरसि गतः। उपाध्यायो मिलितः। प्रणामपूर्वकमेकान्ते तस्मै स्वस्वप्नं कथयामास। स्वप्नं श्रुत्वा हृदये घूर्णित इव तस्थौ। इदं स्वप्नं राज्य-

१ ‘पञ्चगुणः स्मृतः’ इति ङ—पाठः। २ ‘प्रीतिश्चैव जडैः सह’ इति क—पाठः।

दायकम् । पुनः पुनः पप्रच्छ तस्य । ततः कुमारं समाकार्य स्वगृहे याति तावदध्वनि स्त्रीवृन्दं अक्षतभृतं नालिकेरयुतं स्थालं स्वहस्ते गृहीत्वा संमुखं समागच्छन्तं ददर्श । पण्डितो दध्यौ—वर्धापनं संमुखं मिलितम् । ततश्च नरशीर्षे पट्टो मिलितः, एषोऽपि राज्यदः । उक्तं च—

" प्रवेशे निर्गमे वापि, पट्टो भवति संमुखः ।
तस्य राज्यं समादेश्यं, शकुनज्ञेन निश्चितम् ॥१४३॥"

अग्रे मद्यपूर्णः करको नगरमध्ये गच्छतोस्तयोर्मिलितः[1] । तदा पण्डितेनोक्तम्—कुमार ! शकुनाः प्रधाना जायमानाः सन्ति । तेनोक्तम्—कथम्? । पण्डित आह—पूर्वं वर्धापनम्, ततः पट्टः, ततश्चैव करकः । कुमारेणोक्तम्—अस्मिन् करके किमस्ति ? । स आह—

" मदः १ प्रमादः २ कलहश्च ३ निद्रा ४
द्रव्यक्षयो ५ जीवितनाशनं ६ च ।
स्वर्गस्य हानिः ७ नरकस्य पन्था ८
अष्टावनर्थाः करके वसन्ति ॥ १४४ ॥"

कुमार ऊचे—हे पण्डित ! यत्रानर्थास्तत्र प्रवराः शकुनाः कथम् ? पण्डित आह—एवंविधं किं स्यात्? तेनोक्तम्—मद्यम्, तर्हि एष मद्यभृतः करको विद्यते स च शास्त्रज्ञैर्महाशकुनत्वेन प्रतिष्ठितः । यतः—

" कन्यासाधुमहीशमित्रमहिषीदूर्वादिवर्धापनं
वीणामृन्मणि[2]चामराक्षतफलं छत्राब्जदीपध्वजाः ।

१ 'गच्छतां तेषां मिलितः' इति क-पाठः । २ 'मृण्मणि' इति ङ-पाठः ।

वस्त्रालङ्कृत(ति)मद्यमांसकुसुमस्वर्णादिसंद्रातवो
गोमीना दधिदर्पणाग्निविमलाः श्रेष्ठाः कृता दक्षिणे १४५"

तदाकर्ण्य कुमारः प्रमुदितः। शकुनग्रन्थिं बद्ध्वा तत्सार्धं तद्गृहे गतः। ततो बहुमानं दत्त्वा पण्डितः स्वपुत्रीं सोमवतीमस्मै दत्तवान्। कुमारः प्राह—अहं न जाने तद्वार्तामपि। मत्पितैव जानाति। स्वप्नस्वरूपपृच्छयां कन्याप्रदानं ते किम्?। अन्यत् पृच्छ्यते अन्यदुत्तरदानं लवणं मार्गतः कर्पूरार्पणमिव, घृतमार्गणे पट्टकूलकर्पणमिव त्वं कुर्वाणोऽसि। पण्डितः प्रोवाच—त्वं स्वगृहे गच्छ। त्वत्पितुरग्रे कथयिष्यामि। अपक्काग्रे वार्ता न कथ्यते येन तद् हृदये न तिष्ठति। ततः स स्वगृहे गतः, पितुरग्रे स्वरूपं कथयामास। तत्पिता तत्र गत्वा पण्डितं प्रत्यूचे। स्वप्नविचारस्वरूपं कस्मान्नोक्तम्? पण्डित ऊचे—अनेन स्वप्नेन ज्ञायते—अस्य नगरस्य (एष) राजा भविष्यति। यत उक्तं स्वप्नशास्त्रे—

"अन्त्रैश्च वेष्टयेद् यस्तु, ग्रामं नगरमेव वा।
स ग्रामे नगरे देशे, मण्डले पार्थिवो भवेत् ॥ १४६ ॥
आसने शयने याने, शरीरे वाहने गृहे।
दह्यमाने विबुध्येत, तस्य श्रीः सर्वतोमुखी ॥ १४७ ॥
समधातोः प्रशान्तस्य, धार्मिकस्यातिनीरुजः।
शान्तपुंसो जिताक्षस्य, स्वप्नौ सत्यौ शुभाशुभौ ॥१४८॥
रात्रेश्चतुर्थयामे तु, दृष्टः स्वप्नः फलप्रदः।
मासैर्द्वादशभिः षड्भि-स्त्रिभिरेकेन च क्रमात् ॥ १४९ ॥"

---

१ 'मन्मानवा' इति ङ-पाठः। २ 'दुकूलकर्षमिव' इति क-पाठः। ३ 'तुर्यु यामेषु' इति ङ-पाठः।

तच्छ्रुत्वा देवतावागपि सत्येति हृदि ज्ञात्वा **पासदत्त-**श्रेष्ठी हृष्टः पण्डितं प्रत्याह–त्वदुक्तं सर्वं सत्यं, सर्वज्ञोक्तशास्त्रस्य प्रामाण्यात् । पण्डित ऊचे–तेनैव कारणेन मया त्वत्पुत्राय मत्पुत्री दीयमानाऽस्ति । श्रेष्ठिना मानितम् । शुभलग्नं विलोक्य श्रेष्ठिना स्वपुत्रस्य पण्डितपुत्र्या सह महामहोत्सवेन पाणिग्रहणं कारितम् । धनस्वर्णादि दत्त्वा हस्तमोचनादि कृत्वा स्वावासे सप्रियः प्राप्तः । जैनब्राह्मणपुत्री सोमवती द्वितीया प्रिया जाता ॥ २ ॥

अन्यदा तद्गृहासन्नः प्रातिवेशिमको धनदत्तनामा व्यवहारी कोटिस्वामी वसति । दाने माने चातुर्यौदार्ये प्रथमः । तस्य कीर्तिं गुणांश्च सर्वेऽपि कथयन्ति । यतः—

"दानेन वर्धते कीर्ति–र्लक्ष्मीः पुण्येन वर्धते ।
विनयेन पुनर्वित्तं, गुणाः सर्वे विवेकतः ॥ १५० ॥"

तस्य धनश्रीर्भार्या । जिनदास-सोमदासनामानौ पुत्रौ । पुत्रिकाश्चतस्रः सन्ति । धनदत्तेन नव्यावासकरणाय मुहूर्तो गृहीतः । प्रथमं शुभदिने भूमिशुद्धिं विधाय आवासः कारयितु-मारब्धः वास्तूक्तयुक्त्या । यथा—

"दुःखं च देवतासन्ने, गृहहानिश्चतुष्पथे ।
धूर्तामात्यगृहाभ्यासे, स्यातां सुतधनक्षयौ ॥ १५१ ॥
लक्ष्मीनाशकरः[1] क्षीरी, कण्टकी शत्रुभीप्रदः ।
अपत्यघ्नः फली[2] तस्मा–देषां काष्ठमपि त्यजेत् ॥१५२॥"

---

१ 'करः क्षीरवृक्षः' इति ड-पाठः । २ 'फलं' इति ड-पाठः ।

"मूर्खाधार्मिकपाखण्डि–पतितस्तनुरोगिणाम् ।
क्रोधिनांत्यजदृप्तानां, प्रतिवेश्मकतां त्यजेत् ॥ १५३ ॥
प्रथमान्त्यायामवर्जा, द्वित्रिप्रहरसम्भवा ।
छाया वृक्षध्वजादीनां, सा सदा दुःखदायिनी ॥ १५४ ॥"

कियद्भिर्दिनैरावासो निष्पन्नः । विजयमुहूर्ते गृहमध्ये वामभागे श्रीदेवालयं संस्थाप्य देवपूजां विधाय श्रीसङ्घवात्सल्यदीनोद्धारादि कृत्वा च धनदत्तः सपरिवारः स्वनवीनावासे वासं चकार । दिनत्रयं जातम् । चतुर्थदिवसे रात्रौ धनदत्तो गृहमध्ये सुखेन सुप्तः । प्रातः प्रबुद्धः, आत्मानमङ्गणे पल्यङ्के सुप्तं पश्यति, आकाशं तारकैः पुष्पितं च दृष्टम् । धनदत्तो विस्मयं प्राप्तः । द्वितीयदिनेऽपि नमस्कारेष्टदेवस्मरणपूर्वकमपवरके कपाटद्वयं दत्त्वा स सुप्तः । प्रातस्तथैवात्मानं बहिर्दृष्ट्वा चिन्तातुरः सञ्जातः । तृतीयदिनेऽपि धूपोद्ग्राहं विधाय सुप्तः तथैव जातम् । भृशं मनसि खिन्नः । यः कोऽपि परोऽपि कुटुम्बमध्ये तत्र स्वपिति सोऽप्यङ्गणे प्रातर्दृश्यते । सर्वेऽपि भीताः । आवासमध्ये कोऽपि न स्वपिति । धनदत्तेन ज्ञातम्–एष आवासो दुष्टव्यन्तरेणाधिष्ठितो जातः । मन्त्रविदोऽनेके पृष्टाः–सर्वेऽपि मन्त्रोपचारं यदा कुर्वन्ति तदा विशेषतो व्यन्तरः कुपित आवासमध्ये गतानां मनुष्याणां शरीरं भनक्ति, पुरुषस्त्रीणां परस्परं वेषपरावर्तं करोति । तदा धनदत्तेनाचिन्ति–लक्षधनव्ययः अस्मिन्नावासे कृतः, स

१ 'पतितानां च रोगिणाम्' इति ङ-पाठः । २ 'प्रातिवेश्मिकतां' इति ङ-पाठः ।
३ 'गतं मन्त्रिविदं भनक्ति' इति क-पाठः ।

मुधा गतः। धनदत्तश्चिन्तातुरो बहिर्द्वारे उट्टलिके[1] उपविष्टः प्रियङ्करेण दृष्टः। श्याममुखत्वात् स पृष्टः। तेनोक्तम्—

"[2]चिंता दहइ सरीरं, रोगुप्पत्ती अ चित्तविब्भमओ।
चिंताए दुब्बलत्तं [3]निद्दानासो अभुक्खा य ॥ १५५॥"

कुमारेणोक्तम्—किं चिन्तया ?। यतः—

"[4]जं चिय विहिणा लिहियं तं चिय परिणमइ सयललोअस्स।
इय जाणिऊण धीरा विहुरे वि न कायरा हुंति ॥ १५६॥"

तथापि चिन्तां कथय। तेन स्वगृहस्वरूपं प्रोक्तम्—किमप्युपायं यदि वेत्सि, तदा कुरु। त्वं धर्मवानसि। परोपकार्यसि। यतः—

"[5]विरला जाणंति गुणा विरला पालंति निद्धणे नेहं।
विरला परकज्जकरा परदुक्खे दुक्खिया विरला ॥ १५७॥"

---

१ 'ओटले' इति गूर्जरगिरायाम्।

२ छाया—

चिन्ता दहति शरीरं, रोगोत्पत्तिश्च चित्तविभ्रमकः।
चिन्तया दुर्बलत्वं निद्रानाशोऽबुभुक्षा च।

३ 'सुहाणं होइ निण्णासो' इति ङ-पाठः।

४ छाया—

यदेव विधिना लिखितं तदेव परिणमति सकललोकस्य।
इति ज्ञात्वा धीरा विधुरेऽपि न कातरा भवन्ति ॥

५ छाया—

विरला जानन्ति गुणान् विरलाः पालयन्ति निर्धने स्नेहम्।
विरलाः परकार्यकराः परदुःखे दुःखिता विरलाः ॥

प्रियङ्करः प्राह—अत्रोपायकरणे दिनाष्टकं लगति। अधुना तु मम कार्यमस्ति। इभ्य आह–उत्तमाः स्वकार्यं मुक्त्वा परकार्यं कुर्वन्ति। यतः—

"[1]हुंति परकज्जनिरया निअकज्जपरंमुहा सया सुअणा।
चंदो धवलेइ महिं न कलंकं अत्तणो फुसइ ॥ १५८ ॥"

तथा च नैषधे (स० ५, श्लो० ८८)—

"याचमानजनमानसवृत्तेः
पूरणाय बत जन्म न यस्य।
तेन भूमिरतिभारवतीयं
न द्रुमैर्न गिरिभिर्न समुद्रैः ॥ १५९ ॥"

ततस्तेन कुमारेण मानितम्, चिन्ता न कार्या। ततश्चैत्राष्टाह्निकायां कुमारो नव्यावासे श्रीपार्श्वनाथप्रतिमां मण्डयित्वा[2] प्रदीपं कृत्वा पुरतो भोगं[3] कुर्वन् उपसर्गहरस्तोत्रगुणनं[4] प्रतिदिनं मौनेन पञ्चशतीवारं करोति। अष्टमे दिने व्यन्तरो बालकरूपेण ध्यानभङ्गाय समागतः कथयति–मां सीदन्तं रक्ष रक्ष, त्वं कृपावानसि। दशाङ्गुलीर्मुखे क्षिपति तथापि न जल्पति। पुनः स युवा जातः, वक्ति च–एनं बद्ध्वा समुद्रे क्षेपयामीत्युत्पतितः। स ध्यानान्न चचाल। ततः स एव वृद्धरूपो[5] जातः शतसहस्रप्रमाणप-

---

१ छाया—

भवन्ति परकार्यनिरता निजकार्यपराङ्मुखाः सदा सुजनाः।
चन्द्रो धवलयति महीं न कलङ्कमात्मनः मार्ष्टि ॥

२ 'मन्त्रयित्वा' इति ङ–पाठः। ३ 'भोग्यं' इति ङ–पाठः। ४ 'स्तवगुणनं' इति ङ–पाठः। ५ 'एवंरूपो' इति क–पाठः।

[1]लितशीर्षो वचो वदति—अहं नन्दीश्वरे यात्रां कर्तुं गच्छामि, त्वमपि सार्थे समागच्छ यथा यात्रां कारयामि । कुमारो दध्यौ—देवानां पलितानि न स्युः, मानवानां तत्र गमने सान्निध्यं विना शक्तिर्न स्यात् । स एव दुष्टव्यन्तरः सम्भाव्यते । विशेषतो भोगं [2]गुणनं त्वसकृत् कृतवान् । तेन स दुष्टव्यन्तरो विद्युदुद्द्योतवत् पलायितः । ततो महेभ्यः पार्श्वस्तवगुणनपूर्वं [3]सुखेनावासे तस्थौ । धनदत्तेन स्वकुटुम्बाग्रे प्रोक्तम्—प्रियङ्करस्य भाग्यं महदस्ति, अनेन महानुपकार आत्मनां कृतः, तेनास्मै श्रीमती-नाम्नी स्वपुत्री दीयते । स्वजनैरुक्तम्—इष्टं वैद्योपदिष्टं दुग्धं प्राग् मधुरं, पुनर्मध्ये क्षिप्तशर्करम् । ततो धनदत्तेन सहर्षचित्तेन प्रियङ्करः स्वपुत्र्याः पाणिग्रहं कारितः । विस्तरेण हयहा-[4]रहीरकजटितमुद्रिकामुक्ताफलादीनि चीरादि च दत्तानि । स सकलत्रः स्वावासे वासं चकार । तृतीया महेभ्यपुत्री श्रीमती प्रिया जाता ॥

ततः कियद्भिर्दिनैर्व्यन्तरनिर्घाटनवार्ता हितङ्कराभिधानमन्त्रीश्वरेण श्रुता । यतः—प्रायः प्रच्छन्नकृतं पुण्यं शत-[5]शाखतामेति । ततः प्रियङ्कर आकारितः [6]स्वागतादिः पृष्टः । यत उक्तम्—

"एह्यागच्छ समाविशासनमिदं प्रीतोऽस्मि ते दर्शनात्
का वार्ता [7]परिदुर्बलोऽसि च कथं कस्माच्चिरं दृश्यसे ? ।

---

१ 'लितशीर्षकूर्चो वदति' इति ङ–पाठः । २ 'गुणन च कृतवान्' इति घ–पाठः ।
३ 'स्तुत्वा नव्यावासे' इति ङ-पाठः । ४ 'रहीरचीरादि दत्तम्' इति क–पाठः ।
५ 'शाखान्तमतति' इति क-पाठः । ६ 'स्वागतं च पृष्टं' इति घ-पाठः ।
७ 'किमु दुर्व०' इति ङ-पाठः ।

इत्येवं गृहमागतं प्रणयिनं ये भाषयन्त्यादरात्
तेषां युक्तमशङ्कितेन मनसा गन्तुं गृहे सर्वदा॥१६०॥"

अहो कुमार! निष्कारणं तव परोपकारकरणं श्रुतम्। यथा—

"परोपकाराय वहन्ति नद्यः
परोपकाराय फलन्ति वृक्षाः।
परोपकाराय दुहन्ति गावः
परोपकाराय सतां विभूतयः॥१६१॥"

"जलदो १ भास्करो २ वृक्षो ३, दातारो ४ धर्मदेशकाः ५।
एतेषामुपकाराणां, नास्ति सीमा महीतले॥१६२॥"

स्नेहोऽपि सहेतुकः स्यात्। उक्तं च—

"प्रीतिर्जन्मनिवासतो १ ऽप्युपकृतेः २ सम्बन्धतो ३ लिप्सया ४
विन्ध्ये हस्तिवत्१दम्बुजे मधुपवत्२चन्द्रे पयोराशिवत् ३।
अब्दे चातकवद् ४ भवेदसुमतां सर्वत्र नैमित्तिकी
या निष्कारणबन्धुराऽस्ति शिखिवच्चाब्दोदके सा पुनः॥१६३॥"

तव निर्निमित्तकः स्नेहः सर्वोपरि वर्तते। तेन किमपि कार्यं त्वत्सदृशं कथयामि। कुमारः प्राह—मन्त्रिन्! तव सेवकोऽस्मि, कार्यं कथ्यताम्। ततो मन्त्रिणा स्वपुत्रीस्वरूपं निवेदितम्। यथा—एकस्मिन् दिने मत्पुत्री सखीयुता वाटिकायां गताऽभूत्। तत्र कया शाकिन्या गृहीता, न ज्ञायते डाकिन्या वा भूतप्रेतदोषेण व्यन्तरदोषेण वा। वर्षमेकं साधिकं जातम्। उपचाराः कृताः,

---

१ 'गेहानि गन्तुं सदा' इति ह-पाठः। २ 'बन्धुरा शिखिवदम्भोदे क्वचिद् दृश्यते' इति ह-पाठः। ३ 'मन्त्रतः' इति क-पाठः।

गुणो नाभूद् (यथा) दुर्जने सद्वाक्यतः। बहूनि मानितानि। बहून्यौषधानि कृतानि। बहवो वैद्यादयः पृष्टाः। परं केचिद् रोगं वदन्ति, केचिद् भूतादिदोषं, केचिद् ग्रहादिपीडां च। उक्तं च—

"वैद्या वदन्ति कफपित्तमरुत्प्रकोपं
ज्योतिर्विदो ग्रहकृतं प्रवदन्ति दोषम्।
भूतोपसर्गमथ मन्त्रविदो वदन्ति
कर्मेति शुद्धमतयो यतयो वदन्ति ॥ १६४ ॥"

किं कुर्मो वयम्? विषमे सङ्कटे पतिताः स्मः। अष्टमीचतुर्दश्यादौ विशेषेण शरीरे भारो भवति। किञ्चिन्न भुङ्क्ते। न जल्पति। भाषिताऽपि नोत्तरं दत्ते। अस्याः पाणिग्रहणमपि कोऽपि न करोति। तेन अहो प्रियङ्कर! परकार्यङ्कर! मे चिन्तां हर, कृपां कुरु। केनाप्युपायेन गुणः स्यात् तथा त्वं चिन्तय। यावद् धनं विलोक्यते तत् कथय, यथाऽर्पयामि। अस्थिरेण धनेन बहुमीलनेनापि किं प्रयोजनं यत्स्वाङ्गजाद्यर्थे न व्ययितम्?। यतः—

"दैवे गुरौ च धर्मे च, स्वजने स्वसुतादिषु।
यद् धनं सफलं न स्यात्, तेन किं दुःखहेतुना? ॥१६५॥"

कुमारः प्राह—अगुरुकर्पूरकस्तूरीप्रमुखं भोगं समानय यथा किञ्चित् प्रतिकारं करोमि। अस्याः पुण्यं बलवत्तरं भविष्यति तदा मत्कृत उद्यमः सफलो भविष्यति। उक्तं च—

"उद्यमः प्राणिनां प्रायः, कृतोऽपि सफलस्तदा।
यदा प्राचीनपुण्यानि, सबलानि भवन्ति हि ॥ १६६ ॥"

---

१ "बहुनैवेद्यानि" इति ङ-पाठः। २ 'यदङ्गजाद्यर्थे' इति ङ-पाठः।

मन्त्रिणा भोगपुष्पादिकमानीय तस्मै समर्पितम् । ततः कुमारोऽष्टमीचतुर्दशीषु श्रीपार्श्वनाथं पुष्पैः प्रपूज्य भोगं विधाय पञ्चामृतहोमं कृत्वा सदोपसर्गहरस्तवं पञ्चशतीवारं गणयति। शनैः शनैः किञ्चिद्गुणो जायमानोऽस्ति ॥

अस्मिन्नवसरे कुमारस्य यज्जातं तच्छृणुत–प्रियङ्करगृहे तावता कोऽपि ब्राह्मणो निर्धनो मध्यमवया देशान्तरात् समागतः। आशीर्वचो दत्त्वोपविष्टः।[1] प्रियङ्करः प्राह–अहो ब्राह्मण! त्वं किमर्थमागतोऽसि?। स प्राह–सत्पुरुष! त्वत्सदृशं कार्यं किमपि वर्तते। कुमार ऊचे–तर्हि त्वं कथय, यदि सेत्स्यति तदा करिष्यामि। द्विजः प्राह–प्रार्थनां तदा करोमि, प्रार्थनाभङ्गं यदि न करोषि। यतः–

"[2]परपत्थणापवन्नं मा जणणि! जणसु एरिसं पुत्तं।
मा उअरे वि धरिज्जसु पत्थणभंगो कओ जेण ॥१६७॥"

पुनस्त्वं परोपकारी श्रुतः। सतां परोपकार एव सारः। यतः–
" क्षेत्रं रक्षति चञ्चा सौधं [3]लोलत्पटी(?) कणान् रक्षा।
दन्तात्तं तृणं प्राणान् नरेण किं निरुपकारेण? ॥१६८॥"

इत्यादि बहूक्त्वा द्विजेन स्वकार्यं तस्याग्रे प्रोक्तम्—अहो उत्तम! शृणु—'सिंहल'द्वीपे सिंहलेश्वरो राजा। तेन यागो

---

१ 'ददौ उपविष्टः' इति क–पाठः।

२ छाया—
परप्रार्थनाप्रपन्नं मा जननि! जनय ईदृशं पुत्रम्।
मा उदरेऽपि धर प्रार्थनाभङ्गः कृतो येन ॥

३ 'लोलोत्पटी कणाद् रक्षेत्' इति ङ–पाठः।

मण्डितोऽस्ति। तत्रोद्यापने सर्वेषां द्विजानां लक्षमूल्यं हस्तिनां दानं दास्यति; तेन तत्र यास्यामि । यतः—

"[1]किं किं न कयं को को न पत्थिओ कह कह न नामिअं सीसं।
दु[2]ब्भरउअरस्स कए किं न कयं किं न कायव्वं ? ॥१६९॥"

तेन त्वत्पार्श्वे स्वप्रियामोचनायागतोऽस्मि । यावदहं मत्कार्यं कृत्वाऽत्रागच्छामि तावत् त्वं मत्प्रियां रूपलावण्यवतीं स्वगृहे स्थापय । जलानयन-रन्धन-दधिविलोडनादीनि कार्याणि कारयितव्यानि । भोजनं च देयम् । तादृग्विधस्वजनाभावादन्यत्र [3]विश्वासानर्हत्वात्, उत्तमस्य तव पार्श्वे त्यक्त्वा मम गमनेन चिन्ता न स्यात्। कुमारः प्राह—अत्र स्वगोत्रीयान् स्वजातीयान् स्ववर्गीयान् भलाप्य(पयित्वा?)कस्मान्न मुञ्चसे? । द्विज आह—मम मनः क्वापि न म[4]न्यते । उत्तमस्त्रिय उत्तमगृह एव स्थाप्याः, तेनेदमुक्तोर्थं कुरु । कुमारः प्राह—मनो विनाऽपि तव बहुकथनेन परोपकाराय स्थाप्यमानाऽस्ति। कार्यं कृत्वा शीघ्रमागच्छ । द्विजो हृष्टः पुनरूचे—'काशी'वास्तव्यः १ 'कश्यप'गोत्रः २ कामदेवपिता ३ कामलदेवीमाता ४ केशवनामाऽहं ५ करपत्रहस्तः ६ कषायकवस्त्रः ७ इति सप्तभिः ककारैर्योऽभिज्ञानानि पूरयति तस्यैषा स्त्री अर्पणीया इत्युक्त्वा द्विजश्चलितः । कुमारेणाशीर्वचनमुक्तम् । यतः—

---

१ छाया—

किं किं न कृतं कः को न प्रार्थितः कुत्र कुत्र न नामितं शीर्षम् ।
दुर्भरोदरस्य कृते किं न कृतं किं न कर्तव्यम् ? ॥

२ 'दुब्भरभरस्स कज्जे' इति सुबोधिकायाम् ।

३ 'विश्वासो नहि, तदुत्तमस्य' इति ङ-पाठः । ४ 'मनुते' इति ङ-पाठ । ५ 'मत्कार्यं' इति ङ-पाठः ।

" तत्र वर्त्मनि वर्तनां शिवं
पुनरस्तु त्वरितं समागमः ।
अयि साधय साधयेप्सितं
स्मरणीयाः समये वयं वयः(?) ॥ १७० ॥"

यदा त्वमागमिष्यसि स्वयं तदैवार्पयिष्यामीति निश्चयः कृतः। दिनत्रये जाते तद्रूपः तद्वयास्तद्वर्णस्तन्नामा तत्कृकाराद्यभिज्ञान-पुरस्कृतस्तद्वचनस्तद्विलोचनस्तादृङ्मुखो विप्रः समायातः। कुमारेण वादितः सः—त्वं शीघ्रमेव कस्मादागतः ? तत्र कस्मान्न गतः ? स आह—स्वजनैर्वारितः, शकुनाभावश्च जातः । समुद्रमध्ये प्रवहणगमनेन त्रुडनभयेन (येन) च जीवितसंशयः स्यात्, तेन धनेनोपार्जितेन किं फलम् ? । उक्तं च—

" शत्रूणां प्रणिपातेन, धर्मस्यातिक्रमेण च ।
अतिक्लेशेन ये अर्था—स्ते अर्था मा भवन्तु मे ॥१७१॥"

हे कुमार ! परदुःखकातरत्वेन तत्र न गतः । अत्र युष्मादृशाः भाग्यवन्तः सन्ति, तदाधारेण स्थास्यामि । इत्युक्त्वा स्त्रियं गृहीत्वा गतः। ततः कियद्भिर्मासैः स ब्राह्मणो निजप्रियामिलनोत्कः सप्तगजप्रमाणं महाकायं पर्वतप्रायं गजेन्द्रं 'सिंहल'-द्वीपाल्लात्वा प्रियङ्करगृहे प्राध्वरः समागात् । कुमारस्याशिषं दत्त्वोपविष्टः । अहो कुमार ! परोपकारकर ! त्वत्प्रसादाद् गजादिधनमुपार्ज्य क्षेमेणागतः । अद्यतनदिनाद् यज्जीव्यते स तव

१ 'चलोलनयनः' इति ङ—पाठः । २ 'प्रियनाथेन' इति क—पाठः । ३ 'वै' इति ङ—पाठः । ४ 'प्रध्वरः' इति ङ—पाठः, 'पावरो' इति गूर्जरगिरायाम् ।

प्रसादः । मम शिरसि तव भारश्चटापितः[1] । कथमथ प्रत्युपकारं करिष्यामि ? अथवा तवैतत् पुण्यं भवतु । अथ मम पत्नीं समर्पयेति श्रुत्वा वज्राहत इव कुमार ऊचे[2]—त्वमेव प्राग् गृहीत्वा गतः, पुनः किं मार्गयसि ? । सप्ताभिज्ञानानि त्वया पूरितानि । अथ किं झगटकं कुरुषे ? । ज्ञातं ज्ञातम्—द्विजा एवंविधा एव दाम्भिका धूर्ता भवन्ति । द्विजः प्राह—कुमार ! यथा तथा मा वद । दाम्भिका वणिज एव । यतः—

" त्रिदशा अपि वञ्च्यन्ते, दाम्भिकैः किं पुनर्नराः ? ।
देवी यक्षश्च वणिजा, लीलया वञ्चितावुभौ ॥ १७२ ॥ "

अत्र कथा ॥ अहमत्रागत एव नास्मि । अत्रार्थे शपथं करोमि । यदि लोभं करिष्यसि मत्स्त्रियमपलपिष्यसि तदा तव ब्रह्महत्यां दास्यामि । इत्याकर्ण्य कुमारो भीतो विषण्णः श्यामवदनः समभूत् । [3]हृदये दध्यौ—कोऽपि विद्यासिद्धो दुष्टो रूपपरावर्तं कृत्वा स्त्रियं गृहीत्वा गतः । अथ किं करिष्यते ? । द्विजो वक्ति—स्त्रियं लात्वैव यास्यामीति निर्णयः कृतः । तस्यैकं[4] लङ्घनं जातम् । स्वजना मिलिताः प्रोचुः—प्रियङ्करस्य महाविपर्यासो जातः । कदाचिद् वृद्धा अपि विपर्यस्यन्ति । उक्तं च—

" रामो हेममृगं न वेत्ति[5] नहुषो याने न्ययुङ्क्त द्विजान्
[6]विप्रस्यापि सवत्सधेनुहरणे जाता मतिश्चार्जुने ।
द्यूते भ्रातृचतुष्टयं च महिषीं धर्मात्मजो दत्तवान्
प्रायः सत्पुरुषो विनाशसमये बुद्ध्या परिभ्रश्यते ॥ १७३ ॥ "

---

१ 'चटितः' इति ह-पाठः। २ 'प्रोचे' इति ह-पाठः। ३ 'चित्ते' इति ह-पाठः। ४ 'तस्यैकदिनं जातम्' इति ह-पाठः। ५ 'वेत्ति नहुषो याने युनक्ति द्विजान्' इति प-पाठः। ६ 'विप्रीदेव' इति घ-पाठः।

किं दैवविलसितं ? किं दुष्टजनविलसितं ? किं कर्मविलसितं ? किंकर्तव्यतामूढाः सर्वे जाताः। कुमारः प्राह द्विजम्—त्वत्स्त्रियमहं जानामि अपलपामि वा तदा शपथान् करोमि। यथा—

" जीवहिंसाकृतो येऽत्र, वर्तन्ते कूटभाषिणः।
तत्पापं मेऽस्तु चेत् त्वत्स्त्री, मयाऽपलपिता भवेत् ॥१७४॥
धर्मनिन्दी पङ्क्तिभेदी, निद्राच्छेदी कलेः करः।
तत्पापं मेऽस्तु चेत् त्वत्स्त्री, मयाऽपलपिता भवेत् ॥१७५॥
परकीयं धनं येऽत्र, मुष्णन्ति पुरुषाधमाः।
तत्पापं मेऽस्तु चेत् त्वत्स्त्री, मयाऽपलपिता भवेत् ॥१७६॥
कृतघ्ना ये च विश्वास–घातकाः पारदारिकाः।
तत्पापं मेऽस्तु चेत् त्वत्स्त्री, मयाऽपलपिता भवेत् ॥१७७॥
स्वस्त्रियं ये परित्यज्या–न्यत्र कुर्वन्ति ये रतिम्।
तत्पापं मेऽस्तु चेत् त्वत्स्त्री, मयाऽपलपिता भवेत् ॥१७८॥
कलत्रद्वितये स्नेह—विभागं येऽत्र कुर्वते।
तत्पापं मेऽस्तु चेत् त्वत्स्त्री, मयाऽपलपिता भवेत् ॥१७९॥
कूटसाक्षी परद्रोही, पितृद्वेषी कुबुद्धिदः।
तत्पापं मेऽस्तु चेत् त्वत्स्त्री, मयाऽपलपिता भवेत् ॥१८०॥"

द्विजः प्राह—क्रूरकर्मणः शपथान् न मन्ये। कुमारो वक्ति–तर्हि सर्वं धनं गृहाण। विप्र आह–अपरं किमपि न गृह्णामि। मदीयं वस्तु समर्पय। कुमारो वक्ति–कूटकलङ्के सर्वथाऽहं प्राणांस्त्यक्ष्ये इत्युक्त्वा खड्गे हस्तं क्षिपति तावता विप्रेणोक्तम्—

---

१ 'सञ्जाताः' इति ह–पाठः। २ अस्य पद्यस्य स्थानान्तरं ह–पुस्तके।

साहसं मा कुरु। चेन्मत्कथितं करोषि तदा स्त्रियं न मार्गयिष्यामि। कुमारो हृष्टः प्राह—यत् किञ्चित् कथयिष्यसि तत् सर्व करिष्यामि। साक्षिणः के?। तेनोक्तम्—पञ्च। तस्मात् त्वं वद। गृहं त्यक्त्वा देशान्तरं यामि उत द्वादश वर्षाणि वने तिष्ठामि? किमु पृथिव्यां भ्रमामि अथवा यावज्जीवं तव दासो भवामि?। द्विजः प्राह—अलं विस्तरेण। त्वया सर्वं कथितमस्ति तत् सर्वं कार्यं कुरु। तत्रापि धूर्तेन वाचा छलितः, यदा कर्म न स्यात् तदा प्राध्वरं वक्रं स्यात्। स कुमारो विप्रपादयोर्लग्नः। ततस्तेनोक्तम्—विमृश्य प्रोच्यते। अविमृश्यकथितं प्रत्युतानर्थाय स्यात्। कुमारेण सत्यं मानितम्। अथ ममैकस्यैव कार्यं कुरु—यदि मन्त्रिपुत्र्याः प्रतीकारोपायं न करिष्यसि, तदा स्त्रियं न मार्गयिष्यामि। तदाकर्ण्य कुमारः प्राह—प्रतिज्ञातं न मुञ्चामि। द्विज आह—अस्या निर्गुणायाः कटुकजिह्वाया आदरः सतां न युक्तः। कुमारः प्राह—सद्भिर्यद् वचनमुक्तं तदुक्तमेव हस्तिदन्तवत्, यतः—

"गुरुआ न गणंति गुणे पडिवन्नं निग्गुणं पि पालंति।
अहला सहला वि तरू गिरिणा सीसेण वुज्झंति ॥ १८१ ॥"

---

१ 'चेयत्कथितं' इति ढ-पाठः। २ 'कथयसि तत् सर्वं करोमि' इति क-पाठः। ३ 'एते साक्षिणः। कुमारेण प्रोक्तम्—गृह' इति ढ-पाठः। ४ 'अ(वि)मृष्टकथितं' इति ढ-पाठः। ५ 'तदाकर्ण्योपचारं न करिष्यामि इति विप्रेणोक्तम्' इति ढ-पाठः।

६ छाया—

गुरवो न गणयन्ति गुणान् प्रतिपन्नं निर्गुणमपि पालयन्ति
अफलाः सफला अपि तरवो गिरिणा शीर्षेणोह्यन्ते ॥

"दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि
मित्रावसानसमये विहितोदयोऽपि ।
चन्द्रस्तथापि हरवल्लभतां प्रयाति
न ह्याश्रितेषु महतां गुणदोषचिन्ता ॥ १८२ ॥
अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं किल चात्मपृष्ठे ।
अम्भोनिधिर्वहति दुःसहवाडवाग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १८३ ॥"

ततस्तेन प्रियङ्करेण पृष्टम्—अस्या अज्ञाया अबलाया उपरि तव किं वैरं वर्तते येन त्वं पीडयसि विद्याबलेन एनामुपक्षयसि ? यतः—

"तृणोपरि कुठारः किं, मृगे सिंहपराक्रमः ।
कमलोत्पाटने हस्ती, कटकं कीटिकोपरि ? ॥ १८४ ॥"

द्विज आह—अस्या जिह्वाया गुणेन । उक्तं च—

"यस्य जिह्वागुणो नास्ति, तस्य वैरं जगत्त्रये ।
जिह्वायाममृतं यस्य, तस्यात्मीयं जगत्त्रयम् ॥ १८५ ॥
जिह्वाग्रे वसते विद्या, जिह्वाग्रे मित्रबान्धवाः ।
जिह्वाग्रे बन्धनं मोक्षः, जिह्वाग्रे परमं पदम् ॥ १८६ ॥"

कुमार आह—अनया वार्तया ज्ञायते—त्वं द्विजो नासि, कोऽप्य-परो देवो वा दानवो वा वर्तसे । ततो द्विजरूपं मुक्त्वा देवो जातः । गजोऽपि न दृश्यते । राजवाटिकायां मम देवकुलमस्ति, तत्राहं

१ 'न स्यात्' इति ड-पाठः ।

यक्षोऽस्मि। कुमार आह—तर्हि अनया तव किं विनाशितम्? स आह—एषा सखीयुता मद्भवने समागता, मत्प्रतिमां दृष्ट्वा हसिता। अहं सत्यवादी यक्षो लोकानामाशापूरकः। लोको मां पूजयति। एषा वक्ति—अयं देवो न स्यात्। पाषाणो मण्डितोऽस्ति इति वक्त्रं[1] वक्रीकृत्य निर्गता। ततो मया निगृहीता। कुमार ऊचे। यतः—

"[2]जइ मंडलेण भसियं हात्थिं दट्ठूण रायमग्गंमि।
ता किं गयस्स जुत्तं सुणहेण समं कलिं काउं? ॥ १८७ ॥
[3]यद्यपि मृग[4]पतिपुरतो विरसं [5]रसतीह मत्तगोमायुः।
तदपि न कुप्यति सिंहो विसदृशपुरुषेषु कः कोपः?॥१८८॥"

तेन तव कोपोऽपि न विलोक्यते, विसदृशत्वात्। यतः—

" यदि काको गजेन्द्रस्य, विष्ठां [6]कुर्वीत मूर्धनि।
कुलानुरूपं तत् तस्य, यो गजो गज एव सः ॥ १८९ ॥"

इत्यादिकैर्मधुरमधुरैर्वचनैः कुमारेणोपशान्तकोपः [7]कृतः। ततः स आह—तवोपसर्गहरस्तव[8]गुणनेन तच्छरीरे स्थातुं न शक्नोमि। तेन मया तव सत्पुरुषत्वं परीक्षितम्। यतः—

---

१ 'अपकृत्य निर्गता' इति ङ—पाठः।

२ छाया—

यदि मण्डलेन भषितं हस्तिनं दृष्ट्वा राजमार्गे।
तस्मात् किं गजस्य युक्तं श्वानेन समं कलिं कर्तुम्? ॥

३ 'हाथी हालें हेक, लख(प) कूतर गलीए लवें।
वडपण तणे विवेक, कदि न खी(षी)जे किसनीया ॥१॥' इत्यधिको ङ—पाठः।

४ 'सिंहस्य पुरतो' इति ङ—पाठः। ५ 'सरतीह मातङ्गः' इति क—पाठः। ६ 'करोति' इति ङ—पाठः। ७ 'सत्कृतः' इति ङ—पाठः। ८ 'गुणितेन' इति ङ—पाठः।

" क्षामत्व-लक्ष्मलक्ष्येण, गोस्वामी-रजनीशयोः ।
सारं विरञ्चिना हृत्वा, कृताः सन्तो जयन्तु ते ॥१९०॥"

इत्याशिषं दत्त्वा वक्ति—सन्तुष्टोऽस्मि, वरं वृणु । ततस्तेन वरो मार्गितः—मन्त्रिपुत्रीं मुञ्च, सज्जीकुरु । तद्वचनात् तेन मुक्ता, सज्जीकृता । यक्ष आह—परं मन्त्रिन्! इयं एषा बालिका बहुपुत्रपुत्रिका भूयात् । इत्युक्त्वा कुमारस्य सर्वपक्षिणां भाषाज्ञानस्य वरं दत्त्वा यक्षः स्वस्थानं गतः । ततो मन्त्रिणा चिन्तितम्—प्रियङ्करेण महानुपकारः कृतः, तेनास्मै एषा कन्या दीयते । ततो मन्त्रिणा यशोमत्या सह प्रियङ्करस्य स्वगृहे पाणिग्रहणं कारितम् । धन-धान्य-रत्नादिदानं हस्तमोचने कृतम् । सर्वेषां प्रमोदः सम्पन्नः । स च सप्रियः स्वसदने प्राप्तश्चिन्तयति । एष स्तवमहिमा यद् यक्षः प्रत्यक्षो जातः । उक्तं च—

" उपसर्गहरस्तवनं, यच्चित्ते पोस्फुरीति सततमिह ।
भूतव्यन्तरयक्षाः, प्रत्यक्षाः स्युर्नृणां तेषाम् ॥ १९१ ॥"

स यशोमत्या सह भोगान् भुङ्क्ते । क्रमेण तस्या यक्षकथनात् तथैव जातम् । सा वर्षे वर्षे पुत्रपुत्रीयुग्मं प्रासूत । द्वादशभिर्वर्षैः १२ पुत्राः १२ पुत्र्यः अस्या जाताः । तेषां पुत्र्यादीनां च लालन-पालन-रक्षण-स्तन्यपान-भोजनदानचिन्ताकरणादिना खेदं प्राप्ता । तेषां परस्परकलहकरणाद् अविनीतत्वाच्चोद्विग्ना सुखं न शेते, सुखं न भुङ्क्ते । ततः चित्ते चिन्तितवती—या वन्ध्याः स्त्रियो भवन्ति तासां जीवितसंयोगसुखभोजनशयनादि श्लाघ्यम् । कुर्कुटीवन्मया किं कर्म कृतम्? । तेन कस्यापि निन्दा न कार्या, विशेषतो देवतागुरूणाम् । यतः—

"परनिन्दा महापापं, न भूतं न भविष्यति ।
आत्मनिन्दासमं पुण्यं, न भूतं न भविष्यति ॥ १९२ ॥
[1]जो पव्वयं सिरिसा भित्तुमिच्छे
सुत्तं व सीहं पडिबोहइज्जा ।
जो वा दए सत्तिअग्गे पहारं
एसोवमाऽऽसायणया गुरूणं ॥ १९३ ॥"

चतुर्थी प्रिया यशोमती जाता । प्रियङ्करः प्रासादे प्रत्यहं पूजां करोति ।

एकदा तत्र श्रीपार्श्वनाथपूजां कृत्वा चैत्यवन्दनामकरोत् । नमस्कारा उदारा भणिताः । यतः—

"कल्याणपादपवनं प्रभावभवनं रजःशमनम् ।
स्तौमि दयोद्धृतभुवनं पार्श्वजिनं सुरकृतस्तवनम् ॥१९४॥
उपसर्गहरस्तवनं वनेऽपि ते स्मृतिपथं नयन्ति यके ।
अरिकेसरिकरिशङ्का न स्यात् तेषां सुपुण्यवताम् ॥१९५॥
सश्रीकं वसुधाधारं, प्रभूतविषयापहम् ।
प्रगुणश्रीरुचिं वन्दे, मध्याक्षरगुरु[2]स्तवम् ॥ १९६ ॥
जय जय पार्श्व ! जिनेश्वर ! नेश्वर इह कोऽपि तव गुणान् वक्तुम् ।
त्वन्नाम सुरमणिसमं रमणीयं श्रीदपद[3]कमलम् ॥ १९७ ॥"

---

१ छाया—

यः पर्वतं शिरसा भेत्तुमिच्छेत्, सुप्तं वा सिंह प्रतिबोधयेत ।
यो वा देयात् शक्त्यग्रे प्रहारमेषोपमाऽऽशातनायाः गुरूणाम् ॥

२ 'स्तुतम्' इति ड–पाठः । ३ 'कमल !' इति ड–पाठः ।

इति स्तुत्वा स्वगृहे समागच्छन् प्रियङ्करो निम्बस्थकाकरुतं श्रुतवान् । तच्छब्देन ज्ञातम्—काको मां ब्रूते, यथा—

" निम्बवृक्षतलेऽत्रास्ति, लक्षद्रव्यं करैस्त्रिभिः ।
नरोत्तम ! गृहाण त्वं, भक्ष्यं मम समर्पय ॥ १९८ ॥"

तेन काकोपविष्टशाखाऽधस्ताद् भूमिः खानिता । लोकाः पृच्छन्ति—किमर्थं[1] खानयसि ? । तेनोक्तम्—गृहपूरणाय इति सत्यमुक्त्वा तद् द्रव्यं गृहे समानीतम् । काकाय दधिकूरकरम्बो दत्तः । व्यवहारिवर्गेषु स विख्यातोऽभूत् । ततो राजा प्रियङ्करगुणोत्कर्षं श्रुत्वा हृष्टस्तमाकार्योक्तवान्—वारद्वयं त्वया सभायामागन्तव्यम् । राज्ञो मानं च जातम् । स प्राक्कृतपुण्यमहिमा । यतः—

" नरपतिबहुमानं भोजनं च प्रधानं
भवति धनमैमानं[2] शुद्धपात्रेषु दानम् ।
हयगजनरयानं भावतो गीतगानं
शमिह सुरसमानं पूर्वपुण्यप्रमाणम् ॥ १९९ ॥"

प्रियङ्करस्य सर्वोऽपि मानं दत्ते । यतः—

" राजमान्यं धनाढ्यं च, विद्यावन्तं तपस्विनम् ।
रणे शूरं च दातारं, कनिष्ठो ज्येष्ठ उच्यते ॥ २०० ॥"

ततः कियद्दिनैररिशूर-रणशूराख्यौ राज्यार्हौ पुत्रावकस्माद् विपन्नौ । राज्ञो महद् दुःखं जातम् । कस्यापि किमपि चिन्तितं न स्यात् । यतः—

---

१ ' खनसि ' इति ड-पाठः । २ 'मगण्य' इते ड—पाठः ।

"रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥ २०१ ॥
एयं[1] तं च तडागं गयघड बुड्डंति जस्स तीरंमि ।
एसो विहिपरिणामो मज्झे मच्छा खणिज्जंति॥२०२॥"

राजलोकस्यापि चिन्ताऽभूत् । राजा सभायां नोपविशति । मन्त्री प्रबोधयति–अत्र शोकेन किं स्यात्? दैवायत्तस्य वस्तुनः सर्वेषां एवमेव मार्गो वर्तते । अलं खेदेन । यतः—

"न पृथग्जनवत् शुचो वशं, वशिनामुत्तम! गन्तुमर्हसि ।
द्रुमसानुमतां किमन्तरं, यदि वाय्वोघभयेऽपि ते चलाः॥२०३॥"

सगरस्य[2] षष्टिसहस्रं पुत्राः, सुलसाश्राविकाया द्वात्रिंशत् पुत्राश्च[3] समकालं दिवं गताः । तेन सर्वथा शोको न कार्यः । यतः—

"जातस्य हि ध्रुवो मृत्यु–र्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे, का तत्र परिदेवना? ॥ २०४ ॥
एँ[4] संसार असारडो, आसा बंधण जाइ ।
अनेरई क(कि)रि सूइए, अनेरडइ विहाइ ॥ २०५ ॥"

---

१ छाया—

एतत् तच्च तटाकं गजघटा ब्रुडन्ति यस्य तीरे ।
एष विधिपरिणामो मध्ये मत्स्याः खन्यन्ते ॥

२ 'सगरचक्रिणः' इति ङ-पाठः । ३ 'स्ते सर्वेऽपि दिवं' इति ङ-पाठः ।

४ तात्पर्यम्—

अयं संसारोऽसारः आशा वन्धनं याति ।
अन्येन कृत्वा (किल) सुप्यते अन्येन हि (तु) विभाति ॥

तद्दिनादारभ्य राज्ञः पुत्रमोहाद् वपुरपाटवमस्ति—

"अन्नारुचिर्वपुःपीडा, नेत्रे निद्रा न विद्यते ।
नास्ति भूयो मनःस्वास्थ्यं, न जाने किं भविष्यति ?॥२०६॥"

कियद्दिनादनु राजा पाश्चात्यरात्रौ योत्रित[1]खरा[2]यां वाहिन्यामुपविष्टो दक्षिणस्यां दिशि गत इति स्वप्नं लब्धवान् । मन्त्रिणे रहः कथयामास । ततः स्वप्नज्ञो मन्त्रिणा पृष्टः सत्यमं स्वप्नमाह यतः—

"खरोष्ट्रयोर्हि यानेन, याम्यायां दिशि गच्छति ।
अचिरेणैव कालेन, मृतिं तस्य विनिर्दिशेत् ॥ २०७ ॥"

इत्याकर्ण्य नृपमन्त्रिणौ चिन्तातुरौ जातौ । देवस्थानेषु पूजा[3]-भोगादिकं मेनतुः । दीनोद्धारसत्राका( गा )रादिपुण्यानि (च) चक्रतुः ।

एकदा राजा सभायामुपविष्टः । सामन्त-श्रेष्ठि-सेनापति-श्रीकरणा-वेङ्गरणा[4](?)पुरोहित-पत्तिप्रमुखाः प्रणामार्थं गताः[5] सन्ति । तत्समये राजसभायां प्रियङ्करोऽपि गच्छन्नास्ते । तदा मार्गे दे[6]व्यवग्—कुमार! राज्ञः सकाशात् अद्य तव भयं वर्तते । पुनः सा अवक्—चौरवत् तव बन्धनं वर्तते इति कथयन्त्यस्मि । कुमारः समयं विष्कम्भितः दध्यौ—मया अन्यायः कोऽपि कृतो नास्ति, राज्ञोऽपराद्धं नास्ति, अथवा राज्ञो मनः को वेत्ति ? यतः—

---

१ योत्रिता 'जुतेला' इति गूर्जरभाषायाम् । २ 'खरवाहि' इति ङ–पाठः । ३ 'पूजा-भू-गोदानादिकं' इति ङ–पाठ । ४ 'वैरागरणा' इति ङ–पाठः । ५ 'आगताः' इति ङ–पाठः । ६ 'देव्यवग्—हे कुमार! राज्ञः इति ङ-पाठः । क-पाठस्तु यथा—'दिव्या वाग् ज्ञातं च तेन राज्ञ.' ।

"अग्निरापः स्त्रियो मूर्खाः, सर्पा[1] राजकुलानि च।
नित्यं यत्नेन सेव्यानि, सद्यः प्राणहराणि षट् ॥२०८॥[2]"

अथवा दुर्जनविलसितं संभाव्यते। यतः—

[3]"तं नत्थि घरं तं नत्थि देउलं[4] राउलं च तं नत्थि।
जत्थ अकारणकुविया दो तिन्नि खला न दीसंति ॥२०९॥"

[5]"बंज्झइ वारि समुद्दह बज्झइ पंजरि सींह।
जई बद्धा कुणिं कहिउ, दुज्जण केरि जीह ? ॥२१०॥"

मुधा विकल्पेन दोष एव स्यात्। यतः राजैव छलान्वेषी किमप्युक्त्वा दण्डयिष्यतीति तत्रापि कोपः कृतो व्यर्थः स्यात्। यतः—

"[6]दुल्लहजणम्मि पिम्मं खले सुमई जडम्मि उवएसो।
कोवो असमत्थजणे निरत्थओ नत्थि संदेहो ॥ २११ ॥"

---

१ 'सर्प्पराज.' इति ह-पाठः।

२ " काके शौचं द्यूतकारेषु सत्यं सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः।
क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता राजा मित्रं केन दृष्टं श्रुतं वा ? ॥"
इत्यधिको ह-पाठः।

३ छाया—
तद् नास्ति गृहं तद् नास्ति देवकुलं राजकुलं च तद् नास्ति।
यत्र अकारणकुपिता द्वौ त्रयः खला न दृश्यन्ते ॥

४ 'राउलं देउलं' इति ह-पाठः।

५ तात्पर्यम्—
बध्यते वारि समुद्रस्य बध्यते पञ्जरे सिंहः।
यदि बद्धा केन कथयतु दुर्जनस्य जिह्वा ? ॥

६ दुर्लभजने प्रेम खले सुमतिः जडे उपदेशः।
कोपः असमर्थजने निरर्थकः नास्ति सन्देहः ॥

यद् भाव्यं तद् भवत्विति विचिन्त्याग्रे गतः । तावतोच्चस्थाने स्थिता देव्यवक्—तव राज्यं भविष्यति इति श्रुत्वा दध्यौ—देव्या विसंवादि वचनं तथापि साहसमालम्ब्य राजसभायां गत्वा यावद् राज्ञे प्रणामं करोति तावदकस्माद् देववल्लभहारस्तस्य शीर्षात् पतितः सभालोकै राजलोकैर्दृष्टः । सर्वेषामाश्चर्यमभूत् । यो हारो गतोऽभूत् स कुमारपार्श्वाल्लब्धः । कुमारश्चकितः । हा दैवेनासमञ्जसं किं कृतम् ? । चिरकालार्जितं महत्त्वं चौरकलङ्केन सर्वं गतम् । मरणं समागतम् । दुर्गोक्तं सत्यं जातम् । यतः—

" चौर्यपापद्रुमस्येह, वधबन्धादिकं फलम् ।
ज्ञायते परलोके तु, फलं नरकवेदना ॥ २१२ ॥"

पूर्वजन्मनि मया कस्यापि कलङ्को दत्तोऽभूत् सीतावत् । तत् कर्म ममाधुना समुपस्थितम् । ततोऽशोकचन्द्रो राजा एनं बद्ध्वा चौरदण्डः कार्य इति स्वतलारं समादिशत् । मन्त्री प्राह—प्रियङ्करे एषा वार्ता न घटते । एष परोपकारी पुण्यवान् वर्तते । राज्ञा कुमारः पृष्टः । त्वं सत्यं वद । एष लक्ष्यमूल्यो हारः कुतस्त्वया गृहीतः ? कुतो लब्धो वा ? केनार्पितो वा ? केनापि वा तव गृहे स्थापितो वा ? सत्यं वद । कुमार आह—स्वामिन् ! अहं किमपि न जाने । अद्य यावन्मया कदापि दृष्टो नास्ति । राज्ञो यद्विचारे समायाति तत् कार्यताम्[1] । राजाऽऽह—कीदृग् मिष्टवागस्ति ? कीदृक् कलावानस्ति ? । मन्त्र्याह—एष मान्याहोंऽस्ति[2] । चौरदण्डार्हो नास्ति । विमृश्य करणीयम् । यतः—

---

'१ कुर्याः ' इति ड-पाठः । २ ' श्रावकोऽस्ति ' इति ड-पाठः ।

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं, गुणलुब्धाः स्वयमेव सम्पदः[1]२१३
(—किरातार्जुनीये स० २, श्लो० ३०)

"सुगुणमपगुणं वा कुर्वता[2] कार्यजातं
परिणतिरवधार्या यत्नतः पण्डितेन।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥२१४॥"

स्वामिन्! अस्य विनय एव कुलीनत्वं सदाचारत्वं च कथयति। उक्तं च—

"हंसा गतिं पिकयुवा कलकूजितानि
नृत्यं शिखी परमशौर्यगुणं मृगेन्द्रः।
सौरभ्य[3]शीतललितं मलयाद्रिवृक्षाः
कैः शिक्षिता विनयकर्म तथा कुलीनाः? ॥२१५॥"

राजन्! दैवविलसितमिदं ज्ञेयम्। राज्ञोक्तम्—मन्त्रीश्वर! त्वया जामातृत्वादेतस्य पक्षः क्रियमाणोऽस्ति। परं चौरपक्षः कस्यापि न श्रेयस्करः। यतः—

"चौरः चौरार्पको मन्त्री, भेदज्ञः क्रयविक्रयी।
अन्नदः स्थानदश्चैव, चौरः सप्तविधः स्मृतः ॥ २१६ ॥"

ततो मन्त्री भीतस्तूष्णीं कृत्वा स्थितः। राज्ञा सेवकानामुक्तम्—एष हारतस्करो दृढं बध्यताम्। ततस्तैस्तदैव बद्धः। राजाऽऽह

---

१ 'सम्पदा' इति ङ—पाठः। २ 'कुर्वतः' इति ङ—पाठः। ३ 'शैत्यललितं' इति ङ—पाठः।

मन्त्रिणम्—हारतस्करस्य भूमिदेवनैमित्तिकेन राज्यमुक्तमभूत्, परं मदुक्तं शूलीराज्यं भविष्यति । मत्पुत्रा गोत्रिणश्च[1] राज्यधारका वर्तन्ते । मन्त्र्याह—राजन् ! एवमेव ॥

तदवसरे स्त्रियश्चतस्रो दिव्यरूपा दिव्याभरणा दिव्यलोचना राजसभायां समागताः । राज्ञा तासां स्वागतं पृष्टम् । सभायां तद्रूपेण चमत्कारो जातः । नृपेण पृष्टाः—कुतो यूयं प्राप्ताः ? केन हेतुना अत्रागताः ? किं तीर्थयात्रार्थं किं स्वजनमिलनार्थं वा ? मद्योग्यं कार्यं कथयन्तु । तन्मध्ये एका वृद्धा प्राह—राजेन्द्र ! 'पाडली'पुरात् प्राप्ताः । प्रियङ्करो मत्पुत्रो गृहाद् रुष्टो गतः, सर्वत्र गवेषितः, परं न लब्धः । वर्षद्वयं जातम् । अधुना 'अशोक'-पुरात् तत्रागतेन केनाप्येकेनोक्तम्—प्रियङ्करो नाम्ना व्यवहारिपुत्र ईदृग्वया ईदृग्रूपश्चतुरः परोपकारपरः समस्ति । तच्छुद्धिं सम्यगवगम्य वयमत्रागताः । पूर्वं देवगृहे गत्वा देवा नताः । यतः—

"[2]आगलि जातां कोट, जेहिं न नामी देवगुरु ।
माथइ वहइंसि मो(पो)ट, भो[3]अण सांसइं सांपडइ॥२१७॥"

अत्रागतैरेकोऽस्माभिः पृष्टः—प्रियङ्करः क तिष्ठति ? । तेनोक्तम्—अद्य प्रियङ्करः सङ्कटे पतितोऽस्ति । राजमान्योऽपि

---

१ 'मद्गोत्रिणश्च' इति ङ-पाठः ।

२ तात्पर्यम्—

अग्रे गच्छद्भिः ग्रीवां यैः न नामिता देवगुरून् प्रति ।
मस्तके वक्ष्यते पोट्टलिका (महती) ( तैः ) भोजनं संशयेन सम्प्राप्स्यते ॥

३ 'भोजननो सांसो पडे' इति ङ-पाठः ।

चौरकलङ्केन सत्येन असत्येन वा निगडितोऽस्ति । तच्छ्रुत्वा अत्रागताः । अद्यतनदिनं सफलं जातं हे राजेन्द्र! तव दर्शनेन। ततो राज्ञा प्रियङ्करो मुखाग्रे आनायितः । वृद्धा प्राह—एष मत्पुत्रः । आलिङ्गनं दत्त्वा वत्स! केन कारणेन रुष्टोऽसि? चेद्रुष्टस्तर्हि कुटुम्बं विमुच्य कस्मादत्रागतः?। द्वितीया आह—एष मम भ्राता । तयाऽपि तथैवालिङ्गनादि कृतम् । तृतीया आह—एष मम देवरः । चतुर्थ्याह—एष मम वरः । तन्मुखं विलोक्य स्थिता लज्जानम्रमुखी । सभायां सर्वेषां विस्मयो जातः । लोका वदन्ति–प्रियङ्करकपटं प्रकटीभूतम् । यतः—

"विद्यादम्भः क्षणस्थायी, ज्ञानदम्भो दिनत्रयम् ।
रसदम्भस्तु षण्मासान्, मौनदम्भः सुदुस्तरः ॥२१८॥"

एके कथयन्ति—एतस्य पुंरुपरतस्य[1] पुण्यवतः चौरदोषो लग्नः । यतः—

"शशिनि खलु कलङ्कः कण्टकाः पद्मनाले
जलधिजलमपेयं पण्डिते निर्धनत्वम् ।
स्वजनजनवियोगो दुर्भगत्वं सुरूपे
धनवति कृपणत्वं रत्नदोषी कृतान्तः ॥ २१९ ॥"

तं केचित् प्रशंसन्ति, केचिन्निन्दन्ति, केचित् पश्चात्तापं कुर्वन्ति, केचिद् दैवमुपालम्भयन्ति, केचन तं हसन्ति तथापि स न कुप्यति । यतः—

---

१ 'पुंरत्नस्य' इति ड-पाठः ।

"वायाणा[1] जणयुल्लगा नाह न कीजइ रोस ।
नीकइ[2] कापड पायणु (?) चंगइ माणस दोस ॥२२०॥"

ततो वृद्धा प्राह—राजन्! एनं मत्पुत्रं मुञ्च । राजाह—अनेन मत्कोशाल्लक्षमूल्यो हारो गृहीतः, कथं मुञ्चामि? । वृद्धयोक्तम्—दण्डं समर्पयिष्यामि । राज्ञोक्तम्—यदि लक्षत्रयं दास्यसि तदैवास्य मोक्षः । पुनः सा आह—लक्षत्रयं साधिकमपि दास्यामि । परमेनं मुञ्च । राजाऽऽह—एतस्य पिता क्वास्ति? वृद्धा वक्ति—स्वामिन्! उत्तारकेऽस्ति । ततस्तमाकार्य राजा पृष्टवान्—एष प्रियङ्करस्तव किं स्यात्? । तेनाप्युक्तम्—मत्पुत्रः । तथैव सर्वं प्रोक्तम् । राज्ञा मानितं च । मन्त्री प्राह—सर्वमप्यसत्यम् । एते धूर्ताः सन्ति । कुमारस्य पिता पासदत्तश्रेष्ठी अत्रैवास्ति । माता प्रियश्रीनाम्नी विद्यते । तावाकार्य प्रष्टव्यौ । [illegible]ज्ञो[illegible]—तयोरेव पालकपुत्रो भविष्यति । किं पृच्छयते? तथाप्याकार्यताम् । ततस्तौ राज्ञा आकारितौ समागतौ प्रणामं चक्रतुः । प्राघूर्णिकौ ग्रामस्थौ च पितरावुभावपि समानाकारौ समानरूपौ सदृशवचनौ सदृग्वयसौ किमिव युग्मिनौ जातौ दृश्येते? राज्ञो मन्त्रिणः सभालोकस्य चाश्चर्यं जातम् । राजाऽऽह—मन्त्रिन्! त्वयोक्तं सत्यं जायमानमस्ति । तावन्योन्यं विवदेते पुत्रार्थे—राजन्! न्यायः क्रियतां, नो चेदन्यराजकुले यास्यामः । राजाऽऽह मन्त्रिणम्—कापि बुद्धिश्चिन्त्या ।

---

१ तात्पर्यम्—

वायुवानं (?) जनभापणं, नाथ! न क्रियते रोपः ।
............ शुभे मनुष्ये दोषः ॥

२ 'नींके कापण पायणुं (?)' इति ह-पाठः ।

स आह—सभायां षोडशगजप्रमाणा समचतुरस्रा शिलाऽस्ति, यत्र सार्थवाहाः प्राभृतं कुर्वन्ति । तां य एकेनैव हस्तेनोत्पाटयिष्यति स पिता, स पुत्रं गृह्णीयात्[1] । ततः अतिथिपित्रा सा शिला लीलया एकेनैव हस्तेनोत्पाट्य मस्तकोपरि छत्राकारेण धृता । सर्वेषां कौतुकं जातम् । मन्त्री ऊचे–एष न सामान्यः । राजाऽऽह–त्वं पिता न भवसि, [2]किन्तु देवो वा दानवो वा विद्याधरो वा । स्त्रियोऽपि मानव्यो न स्युः, किन्तु देवाङ्गनाः विद्याधर्यो वा । कस्मादस्मान् विप्रतारयसि ? स्वरूपं प्रकटीकुरु । ततः स देव[3]रूपो जातः । स्त्रियोऽपि अदृशीभूताः । राजेन्द्र ! अहं राज्याधिष्ठायको देवोऽस्मि । तव मरणसमयज्ञापनाय राज्यार्हपुरुषस्य राज्ये स्थापनाय चात्रागतोऽस्मि । त्वमद्यापि बहुतृष्णः बह्वाशातरलितोऽसि । यतः—

" अङ्गं गलितं पलितं मुण्डं
दशनविहीनं जातं तुण्डम् ।
वृद्धो याति गृहीत्वा दण्डं
तदपि न मुञ्चत्याशापिण्डम् ॥ २२१ ॥

जरायामागतायां केनाऽपि किमपि न स्यात् । उक्तं च—

[4]"[5]बल हुंती(ति) हउं पामउं एलेनु (?) धन(ण) ढोर ।
ए त्रण्णि विमासण करि वेसा चारण चोर ॥ २२२ ॥"

---

१ 'गृहीत्वा यातु' इति ड.-पाठः । २ 'दानवो वा, किन्तु देवो वा, त्वं मनुषो न भवसि, विद्याधरो वा' इति ड-पाठः । ३ 'देवो जातः' इति ङ पाठः ।
४ तात्पर्यम्—
बले सत्यहं प्राप्नोमि निष्कारणं धनं पशून् ।
एते त्रयो विमर्शनं कुर्वन्ति वेश्या चारणश्चौरः ।
५ 'वार वहंता याम तु ले तु पर धन ढोर' इति ङ–पाठः ।

तत्र मनसि कोऽपि विमर्शो नास्ति—अहं वृद्धो जातः, कस्य राज्यं ददामि ?। जीर्णस्तम्भभारं नव्यस्तम्भे स्थापयामि। राज्ञा पृष्टम्-कदा मम मरणमस्ति ?। देवः प्रोचे-इतश्च सप्तमे दिने मरणमस्ति। तदाकर्ण्य राजा भीतः। यतः—

"[1]पंथसमा नत्थि जरा दारिद्दसमो पराभवो नत्थि।
मरणसमं नत्थि भयं खुहासमा वेयणा नत्थि॥२२३॥"

ततो नृपेण देवः पृष्टः-राज्यार्हपुरुषं कथय यथाऽहं [2]पट्टे स्थापयामि। देवः प्राह-प्रियङ्करस्य पुण्याधिकस्य राज्यं देहि, अपरस्य कस्यापि सभायां राज्यानर्हत्वात्। राजाऽऽह-राज्यदानं हारतस्करस्य न युक्तम्। यतः—

" कुराजराज्येन कुतः प्रजासुखं
कुपुत्रपुत्रेण कुतो निवृत्तिः ?।
कुदारदारेण कुतो गृहे रतिः
कुशिष्यमध्यापयतः कुतो यशः ? ॥ २२४ ॥"

देव आह—

"[3]देशसौख्यं प्रजासौख्यं, चेद् वाञ्छसि नराधिप !।
स्थापय त्वं तदा राज्ये, [4]पुण्योत्कृष्टं प्रियङ्करम् ॥२२५॥"

---

१ छाया—

पन्थसमा नास्ति जरा दारिद्र्यसमः पराभवो नास्ति।
मरणसमं नास्ति भयं, क्षुधासमा वेदना नास्ति॥

२ 'तं पदे,' इति ङ-पाठः। ३ 'निज देशस्य सुस्वास्थ्य' इति ङ-पाठः।

४ 'पुण्याकृष्टं' इति क-पाठः।

एनं निरपराधं कुमारं मुञ्च । हारोऽनेन गृहीतो नास्ति । अस्य कोशे तालके दत्ते गमनशक्तिः कथं स्यात् ? । तव कोशतः मया गृहीत्वा इयन्ति दिनानि हारः स्थापितो राज्ययोग्यं पुरुषं ज्ञापयितुम् । मयैव त्वदग्रे अस्य शीर्षात् प्रकटीकृतः । ततो राज्ञा कुमारो मोचितः । राजा वक्ति—मम पुत्राय त्वं राज्यं देहि । देवः प्राह—तव पुत्रस्यायुः स्तोकमस्ति । अपरं च प्रजाप्रियो नास्ति । राजेन्द्र ! यदि न मन्यसे तर्हि कुमारिकाचतुष्टय-माकार्य तिलकः कारणीयः । सभामध्ये यस्य कस्यापि प्रथमं तिलकं ताः स्वयमेव कुर्वन्ति स एव राजा भवतु । सर्वैरपि मानितम् । कुमारिका आकारिताः । वर्धापनिकं हस्तेऽर्पितम् । तत्पार्श्वात् सभास्थानां तिलकं कारितम् । ताभिः प्रियङ्करस्यैव राज्यतिलकः कृतः । देवेन चतसृणां कुमारीणां मुखेऽवतीर्य श्लोकचतुष्कं कथितम् । यथा—

एका प्राह—

"जिनभक्तः सदा भूयाः, नरेन्द्र ! त्वं प्रियङ्कर !
शूरेषु प्रथमस्तेन, रक्षणीयाः प्रजाः सुखम् ॥ २२६ ॥"

द्वितीयाऽऽह—

"यत्र प्रियङ्करो राजा, तत्र सौख्यं निरन्तरम् ।
तस्मिन् देशे च वास्तव्यं, सुभिक्षं निश्चितं भवेत्॥२२७॥"

---

१ 'हारचौर्ये गमन०' इति ङ-पाठः । २ 'तिलकं कारणीयम्' इति ङ-पाठः । ३ 'वर्धापनं' इति ङ-पाठः । ४ 'सदाचारो' इति ङ-पाठः । ५ 'प्रथमः स्वीया' इति क-पाठः ।

तृतीयाऽऽह –

" 'अशोक'नगरे राज्यं, करिष्यति प्रियङ्करः ।
द्वासप्ततिं वर्षाणि, स्वीयपुण्यानुभावतः ॥ २२८ ॥"

तुर्याऽऽह—

"प्रियङ्करस्य राज्येऽस्मिन्, न भविष्यन्ति कस्यचित् ।
रोगदुर्भिक्षमारीति–चौरवैरभयानि च ॥ २२९ ॥"

ततो देवाः पुष्पवृष्टिं चक्रुः । अशोकचन्द्रराज्ञाऽपि स्वहस्तेन तिलकं कृतम् । प्रधानगजलोकैरप्यस्य प्रियङ्करस्य राज्याभिषेकः कृतः । प्रियङ्करस्याज्ञा सर्वत्राभूत् । पट्टे उपवेशितः । छत्रं धृतम् । तदग्रे देवाङ्गना ननृतुः । प्रधानपुरुषा जहृषुः । स्वजनास्तुतुषुः । पित्रादयस्तु पुपुषुः । प्रियङ्करनृपस्य देवतादत्तं राज्यं श्रुत्वा वैरिभूपा अपि प्राभृतकं वितेनुः । प्रजास्तस्य पुण्यप्रशंसां चक्रुः । देवा देव्यश्च स्वस्थानं जग्मुः ॥

ततः सप्तमे दिने अशोकचन्द्रस्य मरणं जातम् । प्रियङ्कर-राज्ञा स्वपितृसमानस्य राज्ञो मृतकार्याणि कारितानि । तत्पुत्राणां ग्रामग्रासादि विभज्य किञ्चिदर्पितम् । सर्वेषां ग्रामग्रासादिचिन्तन-कार्याय अधिकारिणो नव्याः स्थापिताः । ततो देशाः साधिताः । श्रीप्रियङ्करनृपस्योपसर्गहरस्तवगुणनादेवेहलोके सर्वाभीष्टकार्य-सिद्धयोऽभूवन् । भाण्डागारे धनकोट्यो जाताः । यतः—

" उपसर्गहरस्तोत्र–गुणनात् कार्यसिद्धयः ।
भवन्ति भविनां पुंसां, मित्रीयन्ते च शत्रवः ॥२३०॥"

---

१ 'अग्रे' इति ड–पाठः ।

तथाच—

"सुकृतं धनस्य बीजं व्यवसायः सलिलमथ प्रतिनीति ।
फलमुपनीय[1] नराणां परिपाकमुपैति कालेन ॥ २३१ ॥"

प्रियङ्करराजा अनेकदानपुण्यानि करोति कारयति (च) । लोका अपि दानादिधर्मपरा जाताः । यतः—

"राज्ञि धर्मिणि धर्मिष्ठाः, पापे पापाः समे समाः ।
राजानमनुकुर्वन्ति[2], यथा राजा तथा प्रजाः ॥ २३२ ॥"

तदनु धनदत्तपुत्री श्रीमतीनाम्नी दाक्षिण्यक्षमाविनय-विवेकालङ्कृता पट्टराज्ञी कृता । कियताऽपि कालेन तस्याः पुत्रो जातः । वर्धापनं कारितम् । दानं दत्तम् । यतः—

"सुभोजनं दिने सारं, सुभार्या सारयौवनम् ।
सत्पुत्रेण कुलं सारं, तत्सारं यच्च दीयते ॥ २३३ ॥"

क्रमेण वर्धमानस्य[3] सोत्सवं जयङ्कर इति नाम[4] पुत्रस्य दत्तम् । पञ्चमे मासे तस्य दन्तः प्रादुरभूत् । शास्त्रज्ञाः पृष्टा राज्ञा । तैरुक्तम्—

"प्रथमे मासि सञ्जात[5]–दन्तो हन्ति कुलं ततः ।
द्वितीये जातदन्तस्तु, स्वतातं विनिहन्ति सः ॥२३४॥
तृतीयके[6] पुनर्मासे, पितरं वा पितामहम् ।
तुर्यमासे च जातेषु, भ्रातृनेव[7] विनाशयेत् ॥ २३५ ॥

१ 'मुपचय' इति ङ-पाठः । २ 'मनुवर्तन्ते' इति ङ-पाठः ।
३ 'वर्धयमानस्य पुत्रस्य' इति ङ-पाठः । ४ 'नाम दत्तम्' इति ङ-पाठः ।
५ 'सञ्जातो दन्तो' इति ङ-पाठः । ६ 'तार्तीयके' इति ङ-पाठः ।
७ 'तेषु भ्रातृन्' इति ङ-पाठः ।

हस्त्यश्वकरभान् पुत्रान्, पञ्चमे पुनरानयेत् ।
मासे करोति षष्ठे तु, सन्तापं कलहं कुले ॥ २३६ ॥

नाशयेत् सप्तमे मासे, धनधान्यगवादिकम् ।
यस्य दन्तयुतं जन्म, तस्य राज्यं विनिर्दिशेत् ॥२३७॥"

तदाकर्ण्य हृष्टो राजा राजकार्यं करोति ॥ अस्मिन्नवसरे राज्ञो द्वितीयहृदयमिव सर्वकार्यधुरन्धरो हितङ्करमन्त्रीश्वरः शूलरोगेण विपन्नः । मन्त्रिणं विना राज्यं न शोभते । यतः—

"[1]सूलविसअहिविसूइयापाणियसत्थग्गिसंभमेहिं च ।
देहंतरसंकमणं करेइ जीवो मुहुत्तेणं ॥ २३८ ॥

[2]मुंहता विणु [3]राजह किस्युं, रखवाल विणु पोलि ।
पति पाखे नारी किसी, पहिरणु विण किसी मोलि ? ॥

रावणस्य गतं राज्यं, प्रधानपुरुषं विना ।
श्रीरामेण निजं राज्यं, प्राप्तं लक्ष्मणबुद्धितः ॥२३९॥"

ततः श्रीप्रियङ्करेण मन्त्रिपुत्रमाकार्य ततो बुद्धिपरीक्षार्थं काव्यमेकं पृष्टम् । यथा—

---

१ छाया—

शूल-विषा-ऽहि-विसूचिका-पानीय-शस्त्रा-ऽग्नि-सम्भ्रमैश्च ।
देहान्तरसङ्क्रमणं करोति जीवो मुहूर्तेन ॥

२ तात्पर्यम्—

मन्त्रिणा विना राज्यं कीदृशं रक्षपालं विना रथ्या ।
पतिं विना नारी कीदृशी परिधानं विना कीदृशः मौलिः ॥

३ 'राज ज' इति ङ-पाठः ।

मुखं विनाऽत्ति न करोति शुद्धिं
हस्तौ न भक्ष्यं बहु भाजनस्थम्।
रात्रिंदिवादि न कदापि तृप्तः
शास्त्रानभिज्ञः परमार्गदर्शी॥ २४० ॥

मन्त्रिपुत्रेण विमृश्योक्तम्—प्रदीपः। पुनः[1] पृष्टः—

"[2]नारि तिन्नि छइ एकठी मिली बे गोरी त्रीजी सांमली।
पुरुषह विण नवि आवइ काजि रात्रिंदीस मानीजइ राजि२४१"

तेनैवोत्तरं दत्तम्—दोति, लेखिनी, मषी। सभास्थेन विदुषोक्तम्—

"योगी किं ध्यायति ध्याने?, गुरवे क्रियते किमु?।
प्रतिपन्नं सतां कीदृक्?, आदौ छात्रा पठन्ति किम्?॥२४२॥"

स आह— ॐ नमः सिद्धम्। मन्त्रिपुत्रेण विद्वान् पृष्टः—मदुक्तं कथय। यथा—

[3]"एक पुरुष कोडिहि परिवरिओ हीडइ बालकहीइ(कडीइ?)चढिओ
नारीना मनि सोह जि लहई रूडो विरुओ लोक तसु कहइ२४३"

---

१ 'पुना राज्ञा पृष्टम्' इति ड–पाठः।

२ तात्पर्यम्—

नार्यस्तिस्रः सन्ति एकत्र मिलिताः द्वे गौर्यौ तृतीया श्यामला।
पुरुषं विना नागच्छन्ति कार्ये रात्रिंदिवा मन्यन्ते राज्ये।

३ तात्पर्यम्—

एकः पुरुषः कोटिभिः परिवृतः हिण्डते बालकहृदये (कट्यां?) चटितः।
नारीणां मनसि शोभां यो लभते शुभमशुभं वा लोकस्तं कथयति॥

चन्द्रमाः । ततस्तद्बुद्धिरञ्जनेन राज्ञा मन्त्रिपुत्रो मन्त्रिपदे स्थापितः । यतः—

" बुद्ध्या जानन्ति शास्त्रं विमलगुणतती राजमानं च नित्यं
बुद्ध्या सर्वार्थसिद्धिर्भवति रिपुबलं जीयते तत्क्षणेन ।
बुद्ध्या गृह्णन्ति दुर्गं लघुरपि नृपती रक्ष्यमाणं सुयोधैः
बुद्ध्या चाणाक्य-रोहा-ऽभयकुमरवराः प्रापिता द्राक् महत्त्वम् ॥ २४४ ॥"

तस्मिन्नवसरे श्रीधर्मनिधिसूरयः तत्र प्राप्ताः[1], तेषां वन्दनार्थं श्रीप्रियङ्करो राजा सपरिवारो गतः । श्रीगुरुभिरुपदेशो दत्तः । यथा—

"जि[2]नप्रणामो जिननाथपूजा
नमस्कृतेः संस्मरणं च दानम् ।
सूरीश्वराणां नतिपर्युपास्ती
रक्षा त्रसानां दिनकृत्यमेतत् ॥ २४५ ॥"

अ[2]स्मिन् काव्ये कर्तुर्नाम ।

"श्रीतीर्थयात्राकरणं महेन १
साधर्मिकाणामदनस्य दानम् २ ।
श्रीसङ्घपूजा ३ ऽऽगमलेखनं च ४
तद्वाचनं ५ स्यादिति वर्षकृत्यम् ॥ २४६ ॥'

तीर्थयात्राफलं यथा—

" सदा शुभध्यान १ मसारल[3]क्ष्मी-
फलं २ चतुर्धा सुकृताप्ति[4]रुच्चै ३ ।

१ 'आगतः' इति ङ—पाठः । २ अस्य पद्यस्य पदप्रारम्भिकाक्षरेण कथाकर्तुः 'जिनसूर' इति नाम प्रकटीभवति । ३ 'लक्ष्म्याः फलं' इति ङ-पाठः । ४ 'रुच्चैः' इति ङ-पाठः ।

तीर्थोन्नतिश्च[4]स्तीर्थकृतां पदाप्ति[5]-
गुणा हि यात्राप्रभवाः स्युरेते ॥ २४७ ॥
वपुः पवित्रीकुरु तीर्थयात्रया
चित्तं पवित्रीकुरु धर्मवाञ्छया ।
वित्तं पवित्रीकुरु पात्रदानतः
कुलं पवित्रीकुरु सच्चरित्रतः ॥ २४८ ॥"

विशेषतः श्री'शत्रुञ्जय'महातीर्थयात्रायाः फलं वर्तते । यतः—

" 'नमस्कार'समो मन्त्रः, 'शत्रुञ्जय'समो गिरिः ।
धर्मो जीवदयातुल्यः, शास्त्रं 'कल्प'श्रुतान्नहि ॥ २४९ ॥
'शत्रुञ्जये'[3] जिने दृष्टे, दुर्गतिद्वितयं क्षिपेत् ।
सागराणां सहस्रं तु, पूजास्तोत्रविधानतः ॥ २५० ॥
पल्योपमसहस्रं तु, ध्यानाल्लक्षमभिग्रहात् ।
दुष्कर्म क्षीयते मार्गे, सागरोपमसञ्चितम् ॥ २५१ ॥"

श्रीप्रियङ्करो गुरूपदेशं श्रुत्वा विशेषधर्माभिग्रहान् जग्राह । पुनरुपसर्गहरस्तवगुणाम्नायं पप्रच्छ । श्रीगुरवः प्रोचुः—अस्मिन् स्तवे श्रीभद्रबाहुगुरुभिः मन्त्रा यन्त्राश्चानेके गोपिताः सन्ति । यत्स्मरणादद्यापि

"[5]सलिलानलविषविषधर—दुष्टग्रहराजरोगरणभयतः ।
राक्षसरिपुगणमारी—चौरेतिश्वापदादिभ्यः ॥ २५२ ॥"—

---

१ 'श्रीशत्रुञ्जयतीर्थयात्रामहाफलं' इति क-पाठः । २ 'यथा' इति ङ-पाठः । ३ 'शत्रुञ्जयो येन दृष्टो' इति ङ-पाठः । ४ 'गुणाः' इति क-पाठः । ५ इदं पद्यं श्रीमानदेवसूरिकृते 'लघुशान्ति'स्तोत्रे ( गा० १२ ) विद्यते ।

रक्षा स्यात्। राजेन्द्र ! यत् तत्र सुख-संयोग-सन्तान-सम्पत्-समीहितार्थसिद्धिः साम्राज्यप्राप्तिः तथा दुःख-दारिद्र(द्य)-दास-दौर्भाग्य-पाप-पाटच्चर-विपन्निवृत्तिश्चाभूत् स सर्वोऽप्युपसर्गहरस्तवगुणनध्यानमहिमा ज्ञेयः। प्राक् स्तवे षष्ठी गाथाऽभूत्। तत्स्मरणेन तत्क्षणात् धरणेन्द्रः प्रत्यक्ष एवागत्य कष्टं निवारितवान्। ततस्तेन धरणेन्द्रेण श्रीपूज्याग्रे प्रोक्तम्—पुनः पुनरत्रागमनेनाहं स्थाने स्थातुं न शक्तोऽस्मि। इति(तः1) तेन षष्ठी गाथा कोशे स्थाप्या। पञ्चभिर्गाथाभिरपि अत्रस्थस्तत्स्तवं ध्यायतां सतां सान्निध्यं करिष्यामि। तदनु पञ्चगाथाप्रमाणं स्तवनं पठ्यते। आद्यगाथयोपसर्गोपद्रवविषहरविपन्निवृत्तिः स्यात् ॥ १ ॥ प्रथमद्वितीयगाथाभ्यां गुणिताभ्यां ग्रहरोगमरक(की)विषमज्वरदुष्टदुर्जनस्थावरजङ्गमविषोपशमः स्यात् ॥ २ ॥ आद्यद्वितीयतृतीयगाथाभिर्गुणिताभिर्नरतिरश्चां विषमरोगदुःखदौर्गत्यहीनकुलादि न स्यात्, सुखसुगतिसौभाग्यलक्ष्मीमहत्त्वादि च स्यात् ॥ ३ ॥ चतसृभिर्गाथाभिः सर्ववाञ्छितप्राप्तिः स्यात् ॥ ४ ॥ एतासु श्रीपार्श्वचिन्तामणिमन्त्रो न्यस्तोऽस्ति श्रीभद्रबाहुपादैः। सम्यग् गाथापञ्चकप्रमाणं गुणितं इहलोकपरलोककार्यकरम् ॥ ५ ॥ अत्रानेके मन्त्राः स्तम्भन-मोहन-वशीकरण-विद्वेषणो-च्चाटनरूपा गुप्ताः सन्ति। ते मन्त्रा यन्त्राश्च तद्वृत्तितो ज्ञेयाः। ततो नृपः श्रीगुरून् वन्दित्वा स्वस्थाने प्राप्तः। राजाऽऽसन्ने श्रीपार्श्वनाथप्रासादे रात्रौ सर्वदोपसर्गहरस्तवनगुणनध्यानं करोति प्रहरं यावत् ॥

---

१ लघुवृत्तितः इति प्रतिभाति।

एकदा श्रीप्रियङ्करराजा प्रभुप्रासादे श्रीपार्श्वनाथाग्रे भोगं गृहीत्वा निशायां तद्ध्यानाय[1] प्राप्तः। सेवकाश्च प्रासादाद् बहिः स्थिताः। प्रातःसमयो जातः। सभायां राजलोकाः समागताः। राजाऽद्यापि (किं) सदसि न[2] समागत इति प्रधानैरङ्गरक्षकाः पृष्टाः। तैरुक्तम्—राजा देवगृहादागतो नास्ति। प्रधानास्तत्र गताः। मध्ये कपाटं दत्तमस्ति। कपाटविवरेण तैर्विलोकितम्। श्रीपार्श्वनाथः सुरभिपुष्पैः पूजितोऽस्ति, अग्रे प्रदीपको वर्तते; परं राजाऽग्रे उपविष्टो न दृश्यते। हृदि ज्ञातं तैः—राज्ञो निद्राऽऽगता संभाव्यते। साऽपि देवगृहे ८४ आसातनाभयान्न घटते। राजा तथापि प्रधानैर्मधुरवचनैरालापितः—आस्थानसभाऽलङ्क्रियताम्। सूर्योऽपि[3] श्रीप्रभुमुखकमलविलोकनायोच्चैश्चटितोऽस्ति। सभालोकः पुनः प्रणामार्थमूर्ध्वदमोऽस्ति। तथापि मध्ये कोऽपि न ब्रूते। मन्त्रिणो[4] दध्युः—केनापि देवेन वा विद्याधरेण वाऽपहृतः। ततः कपाटोद्घाटनाय[5] यद्यदेनकथा कृतं तत् निष्पुण्यकमनोरथवत् निष्फलं जातम्। कुठाराः कुण्ठिता अभूवन्। देवतादत्तं कपाटं केनाप्युद्घाटयितुं न शक्यते। ततो [6]भोगादि मन्त्रिभिः कृतम्। तदा तदधिष्ठायको देवोऽवक्—पुण्यवन्नृपदृष्ट्या द्वारमुद्घटिष्यति। राजा सुखेन वर्तते, चिन्ता नानेया। प्रधानैः प्रोक्तम्—अस्मत्स्वामी कास्ति? केनापहृतः?। कदा समागमिष्यति?। ततो देवः प्राह—

---

१ 'तत्स्तवनलयं' इति ङ–पाठः। २ 'नायाति' इति क–पाठः। ३ 'प्रातः' इति ङ–पाठः। ४ 'मन्त्री दध्यौ' इति क–पाठः। ५ 'द्घाटनोपाया अनेके कृताः निष्पुण्यकमनोरथवत् निष्फला जाताः' इति ङ–पाठः। ६ 'बलिभोगादि' इति ङ–पाठः।

"ऋद्धिं दर्शयितुं स्वीयां, कान्ता मे भवनाद् गतः ।
समेष्यति नृपो नून-मितश्च दशमे दिने ॥ २५३ ॥

आगन्ता युष्माभिस्तत्र, पुरो दीपं [1]विधाय च ।
प्रत्यहं पार्श्वनाथस्य, पूजां कुर्वन्तु सादरम्॥२५४॥" युग्मम्।

ततो मन्त्रिणस्तत्राजपरिवारश्च सर्वेऽपि स्वाः स्वगृहे गताः। (अन्यदा) प्रातः प्रासादस्यप्रतिमापूजामर्दीपादि लोकाः पश्यन्ति। दशमदिने मन्त्रिणः राजपरिवाराः संभूय गताः। तावता वने दिव्यतुरङ्गमे चटितो राजा समायातः। सर्वेऽपि प्रणामं चक्रुः। राज्ञो महदाश्चर्यं जातम् (पृष्टं) च। मदागमनं कथं ज्ञातम्? ।ततो मन्त्रिणोऽवादिषुः—देवयात्रायात् वाद्येषु वाद्यमानेषु तोरणेषु बद्धेषु पताकासुत्तम्भितासु गन्धर्वेषु गायत्सु राजा सोत्सवं देवगृहे(हं) प्राप्तः, तावत् कपाटानि तद्दृष्ट्या तत्कालमुद्घटितानि, यथा सहकारमञ्जर्या कोकिलाकण्ठम्, यथा वा विद्यायोगेन नरः कुण्ठः सकर्णः स्यात्। ततो यथाविधि प्रसादे प्रदक्षिणां दत्त्वा नैषेधिकीं कृत्वा मध्ये प्राप्तः। फलानि ढौकयित्वा देवस्तुतिमकरोत्। यथा—

"श्रीपार्श्वो धरणेन्द्रसेवितपदः पार्श्वं स्तुवे भावतः
पार्श्वेण प्रतिबोधितश्च कमठः पार्श्वाय कुर्वेऽर्चनम्।
पार्श्वाच्चिन्तितकार्यसिद्धिरखिला पार्श्वस्य तेजो महत्
श्रीपार्श्वे प्रकटः प्र[6]भाव इह भोः श्रीपार्श्व! सौख्यं कुरु।२५५॥

---

१ 'विधास्यति' इति ट-पाठः। २ 'पूजाकृत भविष्यति' इति ड-पाठः। ३ 'वादित्राणि' इति ट-पाठः। ४ 'भणित.' इति क-पाठः। ५ 'कुर्वे नतिम्' इति ट-पाठः। ६ 'भाग्यदशा' इति ट-पाठः।

'वरकनकशङ्खविद्रुम'—नानाभरणैर्विभूषितो जीयाः।
त्वां स्तौमि पार्श्वजिनं 'मरकतघनसन्निभं विगतमोहम्'।२५६।
'सप्ततिशतं जिनानां' त्वां प्रसिद्धीकृतं प्रभावेण।
श्रीपार्श्वजिन! कलावपि 'सर्वामरपूजितं वन्दे'॥ २५७॥

नमस्कारानुक्त्वा शक्रस्तवादि भणित्वा विज्ञप्तिकां राजा कुरुते। यथा—

"जय पास! जिणेसर! जगहसार, पइं(हु) निम्मियतिहुयणपरूवयार!
मणवंछियपूरणकप्पसाल!, तुह महिमा महि मांहि विसाल२५८
भवि भवि हुं भमीउ वहुअ ठाम, सेवक से थप्पि अम्ह रक्खि माम।
तसु चिंतिय सिज्झइ सयल काम, जे जंपइ संपइ पास नाम २५९॥

---

१ एतत्काव्यद्वयं निम्नलिखितपद्यस्य समग्रचरणसमस्यारूपं वर्तते—

"वरकनकशङ्खविद्रुम—मरकतघनसन्निभं विगतमोहम्।
सप्ततिशतं जिनानां सर्वामरपूजितं वन्दे॥"

किञ्च पद्यमिदं सन्तुल्यता 'तिजयपहुत्तस्तोत्रस्य' निम्ननिर्दिष्टगाथया—

"वरकणयसखविद्दुममरगयघणसन्निह विगयमोहं।
सत्तरिसयं जिणाणं सव्वामरपूइअ वदे॥"

२ 'पार्श्व नेत!' इति क-पाठः। ३ 'त्वया' इति क-पाठः। ४ 'पेठे' इति ड-पाठः।

५ तात्पर्यम्—

जय पार्श्व! जिनेश्वर! जगत्सार! प्रभो! निर्मितत्रिभुवनपरोपकार!।
मनोवाञ्छितपूरणकल्पपादप! तव महिमा महीमध्ये विशालः॥

६ 'तुह सोहग सुह महिमा विसाल' इति ड-पाठः।

७ भवे भवेऽहं भ्रमितवान् वहुषु च स्थानेषु सेवकत्वे स्थापयित्वाऽस्माकं रक्षय लज्जाम्।
तस्य चिन्तनेन सिद्ध्यंति सकलं कर्म यो जपति सम्प्रति पार्श्वनाम॥

रण वण जल जलणह भय महंत, रोगगहहरि करि जइ पमंत ।
दुह दालिद दोहग दूरि जंति, जे समरइं तुह इक चित्ति २६०
रवि तावहि जिम तम दूरि जाइ, तिम सामीय समवहि कुण करेइ ॥
सुह संति निपावइ जाइ जेम, पय सेवइ छेदइ तुरइ तेम ॥२६१॥
इय जिणसूरिहि आणंदपूरिहि, पासनाह संथुणीय मणिहिं ।
पउमावइ देवी तुह पयसेवी, सुरनर किंनर धरणेंद ॥२६२॥
तुह सवि कहे सरसुं नयणं, निरखुं टाले आवागमन दुह ।
तुह महिमा मोटी पयतलि, लोटी मागु सिद्धि अणंत सुह२६३”

इति श्रीपार्श्वनाथविज्ञप्तिं कृत्वा स्वावासे समागमञ्चकार । प्रधानैः पृष्टः पातालोकस्वरूपं श्रीधरणेन्द्रसमृद्धिस्वरूपं राज्ञा-ऽऽह—अहं प्रासादे ध्याने स्थितः श्रीपार्श्वनाथस्तवं गुणन्नस्मि । तदा सर्पो महाकायः कज्जलच्छायः प्रकटीभूतः । तं दृष्ट्वा ध्यानं न मुक्तवान् । ततः श्रीपार्श्वनाथपद्मासने चटितः । मया देवस्या-शातनाभयाद् दुष्टजीवत्वाद्धस्तेन सर्पः पुच्छे धृतः, तदा सर्परूपं त्यक्त्वा देवो जातः । मया पृष्टः—कस्त्वम्? । स आह—अहं धरणेन्द्रः श्रीपार्श्वनाथसेवकः तव ध्यानाकृष्टोऽत्रागतः, मया

---

१ तात्पर्यम्—

रणवनजलज्वलनभयं महारोगग्रहहरिकरिजं भवति प्रमान्तम् ।
दुःखदारिद्र्यदौर्गत्यानि दूरे गच्छन्ति यः स्मरति त्वां इह एकचित्तेन ॥
रवितापेन यथा तमो दूरे गच्छति तथा स्वामिनः साम्यं कः करोति ।
सुखं शान्ति प्राप्नोति प्रयाति यः पादलग्निष्यति दूरे तथापि सः ॥
इति जिनसूरिः आनन्दपूरे पार्श्वनाथः संस्तुतो मनसि ।
पद्मावती देवी तव पदसेविनी सुरनरकिन्नरधरणेन्द्रा (अपि) ॥
तव सर्वे कथयन्ति सदृशं नयनेन निरीक्षित अपाकरोति आगमनदुःखम् ।
तव महिमा महान् पदतले लुठित्वा याचे सिद्धिं अनन्तसुखम् ॥

२ ‘सिंहासने’ इति ङ-पाठः । ३ ‘सर्पपुच्छः’ इति ङ-पाठः ।

परीक्षितश्च त्वं ध्यानान्न चलितः, तेन तव साहसं महदस्ति । अहो! उत्तम! मत्स्थाने समागच्छ यथा तव पुण्यफलं दर्शयामि । ततोऽहं धरणेन्द्रेण सह पातालभवने गतः । तत्र रत्नस्वर्णबद्धा भूमिका सर्वत्र दृष्टा। अग्रे धर्मनरेन्द्रस्यावासो वैक्रियो दर्शितः । ततः श्रीधर्मनृपः साक्षाद् दृष्टः । तत्पट्टराज्ञी जीवदया दृष्टा । तयोः प्रणामो मया कृतः। तावाहतुः—अस्मत्प्रसादेन चिरं राज्यं कुरु । ततोऽग्रे सप्तापवरिका दृष्टाः । मया पृष्टम्—एतासु किमस्ति? धरणेन्द्र आह—सप्तसु चापवरिकासु सप्त सुखानि सन्ति । मयोक्तम्—कानि तानि? इन्द्र आह—

"आरोग्यं प्रथमं १ द्वितीयकमिदं लक्ष्मी २ स्तृतीयं यशः ३
तुर्यं स्त्री पतिचित्तगा ४ च विनयी पुत्रस्तथा पञ्चमम् ५ ।
षष्ठं भूपतिसौम्यदृष्टिरतुला ६ वासोऽभयः[3] सप्तमं ७
सप्तैतानि सुखानि यस्य भवने धर्मप्रभावः स्फुटम् ॥२६४॥"

ततः सप्तापवरिका दृष्टाः। प्रथमायां देवः सर्वरोगहरः, चामरयुग्मं चास्ति ॥ १ ॥ द्वितीयायां सुवर्णरत्नमाणिक्यादीनि सन्ति ॥ २ ॥ तृतीयायां महेभ्योऽर्थिभ्यो दानं ददानोऽस्ति ॥ ३ ॥ चतुर्थ्यां स्त्री पतिभक्तिं कुर्वाणाऽस्ति ॥ ४ ॥ पञ्चम्यां विनीतपुत्रपौत्रवध्वादिकुटुम्बं सुमेलम् ॥ ५ ॥ षष्ठ्यां राजा न्यायी प्रजाहितकरो दृष्टः ॥ ६ ॥ सप्तम्यां कोऽपि देव उपसर्गहरस्तवगुणनपरो दृष्टः ॥ ७ ॥ मया पृष्टम्—कस्मादेतद्गुणनम्? ।

---

१ 'भुवने' इति ड-पाठः । २ 'सदने' इति ड-पाठः । ३ 'भये' इति क-पाठः ।

तेनोक्तम्—स्तवध्यानेन देशे नगरे गृहे सर्वभयेभ्यो रक्षा स्यात्, मनोवाञ्छितं[1] नित्यं प्राप्यते । एतत्स्तवसाम्नायप्रभावमन्त्रपुस्तकान्येतानि ॥ ७ ॥ यत्र श्रीधर्मोदयौ[2] स्तः तत्रैतानि सुखानि स्युरिति वैक्रियलब्धिर्दर्शिता । ततोऽग्रे स्वर्णरत्नमयो वप्रो दृष्टः । तत्र लोहमय्यः सप्त प्रतोल्यः । प्रथमप्रतोल्या मध्ये गतः । तत्र सामान्यदेवभवनानि, परितः कल्पवृक्षवनानि । १ । द्वितीयस्यां गतः । तत्र सुवर्णमय[3]क्रीडाशुकपञ्जराणि । शुका नृपं दृष्ट्वा श्लोकं वदन्ति, यथा—

"समागच्छ समागच्छ, प्रियङ्कर ! महीपते ! ।
पुण्याधिकैरिदं स्थानं, प्राप्यते नापरैर्नरैः ॥ २६५ ॥"

तृतीयस्यां कुमारं दृष्ट्वा नृत्यं कुर्वन्तो मयूरा नृभाषयाऽऽहुः—

"सफलं जीवितं नोऽद्य, राजेन्द्र ! तव दर्शनात् ।
धन्यं तन्नगरं नूनं, यत्र राजा प्रियङ्करः ॥ २६६ ॥"

चतुर्थ्यां कस्तूरिकामृगा अग्रे प्रोच्छलन्ति, राजहंसविवेकेन मां प्रणेमुः ॥ ४ ॥ पञ्चम्यां स्फाटिकरत्नमय्यः क्रीडावापिकाः स्नानमण्डपादीनि ॥ ५ ॥ षष्ठ्यां इन्द्रसामानिकगृहाणि ॥ ६ ॥ सप्तम्यां दिव्याङ्गनावृन्दानि अधित्यकायां दृश्यन्ते[4] । ततोऽग्रे धरणेन्द्रसभा नानाऽऽश्चर्यमयी देवकोटियुता दृष्टा । तत्र दिव्यं नृत्यं दृष्टम् । धरणेन्द्रेण स्वपुत्रवन्नव दिनानि पुण्यफलदर्शनार्थं[5] स्थापिता देवा देव्यः प्रतिपत्तिं चक्रुः ।

---

१ 'वाञ्छितानि च प्राप्यन्ते' इति क-पाठः । २ 'धर्मोदयः स्यात्' इति ड-पाठः । ३ 'मयानि क्रीडा कर्तुं क०' इति ड-पाठः । ४ 'द्योतयन्ते' इति ड-पाठः । ५ 'नाय' इति ड-पाठः ।

अत्र देवेन सह देवपूजा मयैव दश दिनानि कृता। यत् तैर्दि-व्याहारो भोजितः तत्स्वरूपं वक्तुं न पार्यते। तत्रत्यां ऋद्धिं दृष्ट्वा मम पुण्ये विशेषरुचिर्जाता। तदा मयोक्तम्—धरणेन्द्र! मां नगरे प्रेषय यथा पुण्यं करोमि। ततः श्रीधरणेन्द्रेण स्वहस्त-सक्ता दिव्यरत्नमयी मुद्रिका सप्रभावा गगनस्थायिनी बहुजन-भोजनदायिनी समर्पिता। एतस्याः प्रभावं शृणु—यदा विशेष-पुण्यकार्यं स्यात् तदा प्रातरेषा नमस्कारोपसर्गहरस्तत्राद्यगाथा-त्रयं वारत्रयं स्मृत्वाऽङ्गणे आकाशे प्रोच्छालनीया। तत्र तावत् स्थास्यति यावत् पञ्चजनसार्धपञ्चशतीनां भोजनं भविष्यति। राजा हृष्टः, तां मुद्रिकां सबहुमानमलात्। ततः तेनाद्य स्वदेव-युतो दिव्यतुरङ्गमेनात्र प्रेषितः। परं युष्माकं संमुखागमनेन कौतुकं जातम्। प्रधानः प्राह—देवाधिष्ठायकदेववाक्, पाता-लगमनात्रागमनकपाटोद्घाटनं यावत् सर्वं मन्त्रिभिः कथितम्। ततो नृप आह—सभाऽग्रे पुण्यफलानि। यानि देवानां सौख्यानि वर्तन्ते, तानि वक्तुं कः क्षमः स्यात्?। उक्तं च—

"[3]देवाण देवलोए जं सुक्खं तं नरो सुभणिओ वि।
न भणइ वाससएण वि जस्स वि जीहासयं हुज्जा ॥२६७॥"

तेन पुण्यमेव करिष्यामि। मन्त्र्याह—पार्थिवानां सदा पुण्यमस्ति। यतः—

---

१ 'ततस्तै०' इति ड-पाठः। २ 'कार्ये राद्धं भोजनं' इति क-पाठः।

३ छाया—

देवानां देवलोके यत् सौख्यं तद् नरः सुभणितोऽपि।
न भणति वर्षशतेनापि यस्यापि जिह्वाशतं भवेत् ॥

"न्यायो धर्मो दर्शनानि, तीर्थानि गुणसम्पदः ।
यस्याधारं प्रवर्तन्ते, स जीयात् पृथिवीपतिः ॥२६८॥
प्रजानां धर्मषड्भागो, राज्ञो भवति रक्षितुः ।
अधर्मस्यापि षड्भागो, यः प्रजा नैव रक्षयेत् ॥२६९॥"

ततो राजा प्रासादादिसप्तक्षेत्र्यां धनं व्युप्तम्[1]—

"[2]जिणभुवणे जिणबिंबे पुत्थयलिहणे चउव्विहे संघे ।
जो ववइ नियदव्वं सुकयत्था ते अ संसारे ॥२७०॥"[3]

[4]मासमध्ये साधर्मिकवात्सल्यद्वयं पाक्षिकस्य पारणे २ श्रीधरणेन्द्रदत्तमुद्रिकारत्नप्रसादात् साधर्मिकवात्सल्यं करोति । बहूनि वर्षाणि जातानि ॥

एकदा पारणके राजा श्रीगुरुवन्दनार्थं प्राप्तः । उपदेशो दत्तः, तदैकः श्राद्धो जिनधर्मवासितः सप्तधातुविहितश्राद्धैकादशप्रतिमः श्रावकैकविंशतिगुणाभिरामेण श्रीआनन्दप्रतिमः द्वादशव्रतधरः श्रीगुरुपादयोः वन्दनकानि ददानोऽस्ति । राज्ञा स नैष्ठिक-

---

१ 'व्ययितम्' इति क-पाठः ।

२ छाया—

जिनभुवने जिनबिम्बे पुस्तकलेखने चतुर्विधे सङ्घे ।
ये वपन्ति निज द्रव्यं सुकृतार्थास्ते च संसारे ॥

३ ड-पाठस्तु यथा—

"जिणभुवण-जिणबिंब-पुत्थय-संघसरूवाइं सत्त खित्ताइं ।
जिण्णोद्धारं पोसहसाला तह साधारणं चेव ॥"
[ जिनभुवन-जिनबिम्ब-पुस्तक-सङ्घरूपाणि सप्त क्षेत्राणि ।
जीर्णोद्धारं पौषधशाला तथा साधारणं चैव ॥ ]

४ 'पाक्षिकद्वयपारणे' इति ड-पाठः ।

पुत्रो निमन्त्रितः। तदा गुरुभिरुक्तम्। अस्याष्टमस्य पारणं वर्तते, तेन पूर्वमेव भोजनं देयम्। राज्ञा प्रतिपन्नम्—स आगतो भोजनार्थमुपवेशितः। तावता महेभ्यानां पञ्चशती भोजनाय समागता। यावत् स श्राद्धः पारणकं कृत्वोत्थितः, तावद् गगनात् मुद्रिका समुत्तीर्णा राज्ञो हस्ते स्वयमागता। राजा दध्यौ—किमद्य सञ्जातम्? किं देवः कुपितः? किं वा ममानास्था काऽप्यभूत्? किं वा मत्पुण्यं क्षीणम्? किं देवोक्तं पुण्यमद्यासत्यं जातम्? कथमधुना महत्त्वं रक्षणीयम्? कथं वा पञ्चशतीनामागतानां शीघ्रं गौरवं करणीयम्? तावद् देववागभूद् राज्ञश्चतुष्के—

"राजंश्चिन्ता नैव कार्या, न मृषा देवतावचः ।
तव पञ्चशतीपुण्य-मेकस्मिन् भोजिते[1] भवेत् ॥ २७१ ॥

महतां महान्तो वात्सल्यकारिणः स्युः, न लघूनां पुण्यवतां गुणवतां कोऽप्यस्ति । यतः—

"नागुणी गुणिनो वेत्ति, गुणी गुणिषु मत्सरी ।
गुणी च गुणरागी च, विरलः सरलो जनः ॥ २७२ ॥"

ततः सूपकारेणोक्तं नृपाग्रे—परमान्नपात्राणि रिक्तानि जातानि। ततो देव आकाशस्थोऽवक्—मा वद, त्वं गत्वा विलोकय, मया भृतानि सन्ति । मनुष्यसहस्राणां भोजने कारितेऽपि न्यूनानि न भविष्यन्ति । नृपो हृष्टः सर्वान् भोजयामास । तानि तथैवाकण्ठं भृतानि दृश्यन्ते । ततः सकलं नगरं निमन्त्र्य भोजितम् । नगरलोकस्य चमत्कारो जातः । कोऽपि पाकं कुर्वाणो न दृश्यते । सर्वेषां दिव्याहारो जातः । तत् किं देवः प्रत्यक्षोऽस्ति ? किं वा

१ 'भोजितः' इति ड-पाठः ।

देवैर्वरो दत्तोऽस्ति ! किं चित्रवल्लिकाऽस्ति ? किं वा स्वर्णपुरुषः प्राप्तोऽस्ति ? । राजाऽऽह सभायाम्—एष धर्मध्यानमहिमाऽवगन्तव्यः । तदा कवीश्वरेणाशीर्वादद्वयमुक्तम् । यथा—

“[1]श्रीमत्कंप्रिप्रियाराद (?) श्रीमत्पययशोमद ।
श्रीसुतैककलौ नन्द श्रीदस्याररमास्पद ॥ २७३ ॥”

स्वस्तिकं श्रीनृ[2]पनामगर्भम् ।

श्रीमत्सभाविवेकाभ ! शातकुम्भलसत्प्रभ ! ।
राजादेसभयादम्भ ! गुणकुम्भ ! रुचानिभः ॥ २७४ ॥”

अष्टदलं कमलं श्रीगु[3]रुनामगर्भम् ।

ततो[4] राजा हृष्टः—

“ ग्रामाः पञ्च हयाः पञ्च, सहस्राः पञ्च काञ्चनाः ।
प्रियङ्करेण तुष्टेन, दत्ता स्वस्तिककारिणे ॥ २७५ ॥”

ततः स्वपित्रोः श्री‘शत्रुञ्जय’महातीर्थयात्रां सविस्तरां कारयामास । यथा—

---

१ एतत्स्थाने ह-पुस्तके काव्यद्वयं यथा—

“ उच्चैः कल्याणवाही करजितवसुधः सर्वदा पूर्णकामो
विख्यातः कर्णवृत्त्या न च वचसि कटुश्चित्रशाकानुभोजी
कोषापेक्षी परस्मादुच्चितबहुपथः सर्वदा पुण्यलोकी
चित्रं राजाधिराज ! त्वमिव तव रिपुस्तत्र कम्पं (?) प्रतीमः ॥ १ ॥
भाले भाग्यकला मुखे शशिकला लक्ष्मीकला नेत्रयोः
हस्ते दानकला भुजे जयकला युद्धे प्रतिज्ञाकला ।
भोगे कोककला गुणे वलकला चित्ते प्रतिज्ञाकला
काव्ये कीर्तिकला तव प्रतिदिनं क्षोणीपते ! राजते ॥”

२-३ प्रियङ्करेति नृपनाम, विशालराजेति गुरुनाम इति सुस्पष्टं यन्त्रदर्शनादवसीयते । ४ ‘ राज्ञा आशीर्वाददातुर्दानं दत्तम्’ इति ह-पाठः ।

"[1]सेत्तुंजो १ सम्मतं २ सिद्धंतो ३ संघभत्ती ४ संतोसो ५ ।
सामाइयं ६ सद्धा वि य ७ सत्त ससा दुल्लहा लोए ॥२७६॥"

तीर्थे साधर्मिकवात्सल्य-श्रीसङ्घपूजा-दीनोद्धार-सत्रागारप्रभृति कृतम् । यतः—

"विवाहे तीर्थयात्रायां, चन्द्रे मित्रे सुरालये ।
वस्त्रदानमिदं श्रेष्ठं, सत्पात्रेषु विशेषतः ॥ २७७ ॥"

तत्पिता पासदत्तश्रेष्ठी तलहट्यां स्वर्गतः । तन्नाम्ना देवकुलिका श्रीशत्रुञ्जये कारिता । तत्स्थाने महोदयं कुर्वन् स्वगृहे प्राप्तः । तदनु स्वर्णमयीं राजादनीं पादुकायुतां कारयित्वा राजा स्वगृहे पूजयामास । ततो वार्धके पुण्यावसरं ज्ञात्वा पुत्राय राज्यं दित्सुस्तं शिक्षयामास । यथा—

"कोपं स्वामिनि मा कृथाः प्रियतमे मानं भयं सङ्गरे
खेदं बन्धुषु दुर्जने सरलतां शाठ्यं [2]विशुद्धात्मने ।
धर्मे संशयितां गुरौ परिभवं मिथ्याविवादं जने
गर्वं ज्ञातिषु दुःस्थितेऽवगणनां नीचे रतिं पुत्रक !॥२७८॥
[3]जीभइं साचु बोलिजे, राग रोस करि दूरि ।
उत्तमसुं संगति करो, लाभइ सुख जिम भूरि ॥२७९॥[4]"

---

१ छाया—

शत्रुञ्जयः सम्यक्त्व सिद्धान्त सङ्घभक्तिः सन्तोषः ।
सामायिकं श्रद्धाऽपि च सप्त ससा दुर्लभा लोके ॥

२ 'विशुद्धाशये' इति ड-पाठ ।

३ तात्पर्यम्—

जिह्वया सत्य ब्रूयात् रागरोषौ कृत्वा दूरे ।
उत्तमस्य सङ्गतिं कुरु लभ्यते सुख येन भूरि ॥

४ दोधकस्यास्य प्रतिपादप्रारम्भिकाक्षरेण 'जीराउला' इति श्रीपार्श्वनाथस्यापरं नाम ।

"[1]जिणवर देव आराहीइ, नमीहि सहगुरु भत्ति।
सूधो धम्म ज सेवीइ, रहीइ निरमल चित्ति[2]॥२८०॥"

गाथाद्वये प्रथमाक्षरेषु जीराउला कर्तुर्नाम च। इति स्वपुत्रस्य जयङ्करस्य शिक्षां दत्त्वा सुमुहूर्ते स्वपदे तं स्थापयामास। राजा धर्मकृत्यानि करोति। अष्टमीचतुर्[3]दश्योः पौषधं गृह्णाति। सुपात्रेषु दानं ददाति। यतः—

"[4]अभयं सुपत्तदाणं अणुकंपा उचियकीत्तिदाणं च।
[5]दुन्नि वि मोक्खो भणिओ तिन्नि वि भोगाइयं दिंति॥२८१॥

ततः प्रान्तसमये जाते पूर्णायुः प्रतिपाल्याराधनाऽनशनादि बहुपुण्यानि विधाय प्रियङ्करराजा 'सौधर्म'देवलोके समृद्धिक-देवोऽभूत्। क्रमेण 'महाविदेह'क्षेत्रे मोक्षं प्राप्स्यति। ततः केचन पुत्राः प्रियङ्करवदतिजाताः पितुरधिका भवन्तिस्म।श्रीस्थानाङ्गे (चतुर्थस्थानके) अप्युक्तम्—"[6]पुत्ता चउव्विहा पन्नत्ता, तं जहा-[7]अइजाए १ सुजाए २ अणुजाए ३ कुलंगारे ४ एवं सीसा वि।"

---

१ तात्पर्यम्—

जिनवरो देवो आराध्यता नन्तव्यः सद्गुरुर्भक्त्या।
शुद्धो धर्म एव सेवनीयः स्थातव्यं निर्मलेन चेतसा॥

२ अत्रापि'जिनसूर'इति कथाप्रणेतृनाम प्रकट्यते। ३ 'पूर्णमास्योः' इति ङ-पाठः।

४ छाया—

अभयं सुपात्रदानं अनुकम्पा उचित-कीर्तिदानं च।
द्वे अपि मोक्षो भणितः त्रीण्यपि भोगादिकं ददति॥

५ 'दोह वि' इति क-पाठः।

६ छाया—

पुत्राश्चतुर्विधा प्रज्ञप्ताः, तद्यथा—अतिजातः सुजातः अनुजातः कुलाङ्गारः। एवं शिष्या अपि। ७ 'सुजाए अइजाए' इति ङ-पाठः।

सहकारश्च सुजातं कूष्माण्डीबीजपूरमतिजातम् ।
वटतरुफलं कुजातं भवति कुलाङ्गारसिग्रुफलम् ॥ २८२ ॥
अतिजातोऽधिकस्तातात्, सुजातः स्वसमः पितुः ।
अपजातो गुणहीनः[1] कुलाङ्गारः कुलान्तकः ॥ २८३ ॥
नाभी[2] रिसहो पढमो बीओ आइच्चमहजसा दुन्नी ।
तइओ आइच्चजसो चउत्थो होइ कंडरीओ ॥ २८४ ॥
'उपसर्गहर'स्तोत्रं, ये ध्यायन्ति दिवानिशम् ।
तेषां प्रियङ्करस्येव, सम्पदः स्युः पदे पदे ॥ २८५ ॥

इति [3]श्रीप्रियङ्करमहाराजः श्रीजिनशासनप्रभावको महाश्रावकोऽभूत् ।

इत्थं प्रियङ्करनृपस्य कथां निशम्य
यत्नो विधेय इह धर्मविधौ सुधीभिः ।
ध्याने शुभे जिनगुरुप्रणतौ च दाने
येनात्र राजसुखसन्ततिसम्पदः स्युः ॥ २८६ ॥
विशालराजसूरीश-सुधाभूषणसद्गुरोः ।
शिष्येण जिनसूरेण, सुकृताय कथा कृता ॥ २८७ ॥
उपसर्गहरस्तोत्र-कथां कल्याणकारिणीम् ।
शृण्वन्ति वाचयन्त्यत्र, सुखिनस्ते भवन्ति वै ॥ २८८ ॥

---

१ 'पुनर्हीनः' इति क-पाठः ।

२ छाया—

नाभेः ऋषभः प्रथमः द्वितीयः आदित्य-महायशसौ द्वौ ।
तृतीयः आदित्ययशाः चतुर्थकः भवति कण्डरीकः ॥

३ धनुश्चिह्नान्तर्गतोऽय ह-पाठः ।

श्रीभद्रबाहुस्वामिसूत्रितं

# उपसर्गहरस्तोत्रम्

( श्रीद्विजपार्श्वदेवगणिरचितलघुवृत्त्या विभूषितम् )



ॐ नमः श्रीपार्श्वजिनाय ।

'धरणेन्द्रं नमस्कृत्य, श्रीपार्श्वं मुनिपुङ्गवम् ।
उपसर्गहर'स्तोत्र–वृत्तिं वक्ष्ये समासतः ॥ १ ॥

प्रणतसुरासुरललाटविन्यस्तमुकुटश्रेणिसमाश्रितमेव चञ्चच्चूडामणिदम्भोलिप्रमुखरत्नप्रभाप्राग्भारप्रकाशितपादपङ्केरुहस्य श्रीपार्श्वनाथस्य सम्बन्धि मन्त्रस्तोत्रं 'उपसर्गहर'नामप्रख्यातं पञ्चगाथाप्रमाणम् । तस्य मया कथितवृद्धोपदेशेन अस्यैव स्तोत्रकल्पानुसारेण चात्मनः स्फुटावबोधनिमित्तं संक्षिप्तवृत्तिर्विधीयते [मध्यगाथा] तस्य चाद्यां[1] गाथामनुक्रमेणाह—

**उवसग्गहरं पासं, पासं वंदामि कम्मवणमुक्कं ।**
**विसहरविसनिन्नासं, मंगलकल्लाणआवासं ॥ १ ॥**

अस्य व्याख्या—वन्दामि–स्तौमि । कं कर्मतापन्नम् ? पार्श्वनाथस्वामिनं अशोकाद्यष्टमहाप्रातिहार्यपूजासमन्वितं चतुस्त्रिंशद्बुद्ध्याऽतिशयोपेतं त्रयो(चतुर्)विंशतितीर्थकरेभ्यः श्रीपार्श्वनाथस्वामिनं

---

१ 'वाद्यं' ( ? ) इति ख-पाठः ।

चत्वारिंशत्सहस्रयक्षपरिवृतः श्रीपार्श्वनाथपादयुग्मसेवां करोति। पुनः कथम्भूतम्? 'कर्मघनमुक्तं', क्रियन्ते इति कर्माणि, घनानि च तानि कर्माणि च 'क्वचित्परनिपातोऽपि' इति (वचनात्) कर्मघनानि तैर्मुक्तम्, निबिडकर्मरहितमित्यर्थः। पुनरपि कथम्भूतम्? 'विषधरविषनिर्नाशं' दुष्टसर्पविषनाशकमित्यर्थः। कथम्भूतम्? 'मङ्गलकल्याणआवासं'। मङ्गलमिति कः शब्दार्थः? उच्यते—'अगि-रगि-लगि-मगी'ति दण्डकधातुरस्य 'इदितानुस्धातोः' इति विहितकुणादिकाडलभूतप्रत्ययान्तस्य अनुबन्धलोपे च कृते प्रथमैकवचनान्तस्य मङ्गलमिति रूपं भवति। मङ्ग्यते यथाहितमनेनेति मङ्गलम्। मङ्ग्यते–विधिना गम्यते साध्यते इति यावत्। अथवा मङ्गेति धर्माभिधानम्। 'रा ला आदाने' इत्यस्य धातोर्मङ्ग उपपदे 'आतोनुपसर्गात् कः' (कातन्त्रे सू० ५८७, पृ० १९५) इति कप्रत्ययान्तस्य 'आतो लोप इट् किति(?)' अनेन सूत्रेणाकारलोपे च कृते प्रथमैकवचनान्तस्यैव मङ्गलमुभसिद्धमिति। कल्याणमिति कः शब्दार्थः? उच्यते—'अण रण' इत्यादिदण्डकधातोः कल्यशब्दपूर्वकस्य कल्यमणतीति कल्याणं कर्मण्यपि 'अस्योपधाया (दीर्घो वृद्धिर्नामिनामिनिचट्सु') (कातन्त्रे सू० २२३, पृ० १३६) इत्यनेन सूत्रेण अकारदीर्घत्वम्। 'समानः सवर्णे दीर्घीभवति (परश्च लोपम्') (कातन्त्रे सू० २४, पृ० ५) इत्यनेन दीर्घे कृते द्वितीयैकवचनान्तस्यैव कल्याणं सिद्धमिति। आवासमिति कः शब्दार्थः? उच्यते—'वस निवासे' इत्यस्य धातोः आङ्शब्दपूर्वकस्य आवासनं आवासः। भावे घञि कृते च समासे 'अस्योपधाया०' (कातन्त्रे सू० २२३) इत्यनेन सूत्रेण कृते दीर्घे आवासं–निवासं रमणीयं स्थानं श्रीपार्श्वनाथजिनालयम्। इति गाथार्थः॥ १॥

अधुना वृद्धसम्प्रदायः—

उपसर्गहरं पार्श्वं प्रत्येकमष्टयन्त्रमन्त्रदर्शनायाह—क्षंकारनामगर्भितस्य बाह्येषु चतुर्दलेषु पार्श्वनाम दातव्यम्। दलाग्रेषु हरः ४ इति न्यसेत्। बाह्ये ह हा हि ही हु हू हे है हो हौ हं हः वेष्टयेत्। मायाबीजं त्रिगुणं वेष्टितं यन्त्रम्।

वंकारनामगर्भितस्य बहिश्चतुर्दलेषु पार्श्वनाम दातव्यम्। बहिर्हर २ निरन्तरं पूरयेत्। बाह्ये द्वादश ह हा इत्यादि वेष्टयेत्। बाह्ये अकारादिक्षकारपर्यन्तं वेष्टयेत्। मायाबीजं त्रिगुणं वेष्ट्य(ते) तृतीयं यन्त्रम्।

हूंकारनामगर्भितस्य शेषं पूर्ववत् सर्वं द्रष्टव्यम्। हं हूं नामगर्भितस्य हकारं वेष्टयेत्। बाह्ये षोडश स्वरानावेष्टयेत् शेषं पूर्ववत्।

पञ्चमयन्त्रवद् झंनामगर्भितस्य बहिरष्टदलेषु ॐ पार्श्वनाथाय स्वाहा दातव्यं, शेषं पूर्ववत् यन्त्रम्। हं(हुं?)कारनामगर्भितस्य बाह्ये मायया वेष्टयेत्। बहिः ॐ पार्श्वनाथाय स्वाहा वेष्टयं, शेषं पूर्ववत्॥७॥

एतेषां सप्तयन्त्राणामपि कुङ्कुमगोरोचनया भूर्जपत्रे संलिख्य कुमारी (कर्तित)सूत्रेणावेष्ट्य वामभुजदण्डे धारणीयं जगद्वल्लभ[ः]सौभाग्ययशोलक्ष्मीवृद्धिः भूतपिशाचराक्षसज्वरग्रहदोषशाकिनीविषविषमहरप्रभृतिभयरक्षा (च) भवति। ॐ ह्रीं श्रीं हर हर स्वाहा। अस्य क्रिया—अष्टोत्तरशतश्वेतपुष्पैर्दिनत्रयं श्रीपार्श्वनाथसमीपे क्रियमाणेन सर्वसम्पदादिकं भवति। ॐ गमलवर्यु(ग्म्ल्व्र्‍यूं ?)त्रिशूलमुद्रया ग्रीं ग्रूं ग्रों ग्राहय २ छिंद भिंद २ विवारिम (निवारय?) २ दमलवर्यूं द्रां द्रीं द्रूँ द्रौं द्रः हा हा ताडय २ घमलवर्यूं घ्रां घ्रीं घ्रूं घ्रौं घ्रः घ्राः र्यूं २ हुं २ फट् हमलवर्वं हां हीं हौं हः हा हा घै २ कठोरे मुद्रायां

ज्वल २ बालय २ प्रज्वल प्रज्वालय २ ॐ नमो भगवते पार्श्वयक्षाय चण्डक्रोधाय सप्तफटाय ह्वूं क्षूं श्रूं शमलवर्यूं श्रां श्रीं श्रूं श्रौं श्रः हा २ घे २ वज्रासि त्रिशूलधारया हर २ इदं भूतं हन २ दह २ पच २ त्रासय २ ख २ खाहि २ मन्त्रराज आज्ञापयति हुं फुट् स्वाहा। पार्श्वयक्षमन्त्रः ॥

अधुना भूतपिशाचप्रेतप्रभृतिरक्षामाह—आग्नेयमण्डले[1] त्रिकोणेषु रांकारं दातव्यं ज्वालाग्रे रेफस्वस्तिकभूषितम्। तन्मध्ये रमलवर्यूं संलिख्य बाह्ये ॐ रमलवरयूंरपरांहाः हां आं क्रों क्षीं ह्रीं क्लीं ब्लूं हां न्हीं पार्श्वयक्षिणी ज्वल २ प्रज्वल २ दह २ पच २ इदं भूतं निर्धाटय २ धूमान्धकारिणीं ज्वलनशिषे हूफुट्(व) मात्रीदूतिकासहिते पार्श्वयक्षिणी आज्ञापयति स्वाहा। एतन्मन्त्रेण वेष्टयेदुच्चाटय इमं पिण्डं ललाटे ध्यायेदग्निवर्णं सर्वाङ्गं भूतं ज्वरं शाकिनीप्रभृति नाशयतीत्यर्थः ॥

इदानीं भूतमन्त्रानन्तरं सर्वविषापहारमहाविषधरविषनिर्नाशं भावमाह—ॐ वमलवर्यूं वं ५ हां आं क्रों क्षीं क्लीं ब्लूं हां ह्रीं ज्वालामालिनी झङ्कारिणी प्रतिसहितविषं निर्विषं कुरु २ स्थावरविषं निर्विष कुरु २ स्थावरविषं अङ्गजं कृत्रिमं विषं जावरं जोगजङ्गमविषं अपहर २ इमं डंकं अमृतेन अभिषिञ्चय २ उत्थापय २ दण्डेनाक्रम्य विषमं विषं ठः ३ ज्वालामालिन्याज्ञापयति स्वाहा। पुरुषप्रमाणं दण्डं गृहीत्वा अष्टोत्तरशतवारमभिमन्त्रयेत् ताडयेदूर्ध्वं साधेया सर्वसन्धिषु कालदष्टो उत्थापयति ॐ नमो भगवते श्रीघोणे हर २ दह २ चर २ मए २ वर धर २ लप २ जरसीद्धग्रस २

---

१ 'मण्डलत्रये' इति ख-पाठ.।

मं २ क्षं २ क्षीं हीं हां २ हूं भगवति श्रीमं बोणवः म २ ठः २ डः २ गः २ घेन् क्रोंन् श्रींवरविहंगमानुजेपन दारिकर-वरिद्रासोरय २ गं ३ ठ ३ हूं फट्स्वाहा। श्रीवोणमन्त्रः—ॐ नमो भगवते श्रीवोणे हर २ दर २ मर २ धर २ मध २ हरसा २ क्ष २ व २ हमलवरयूं क्षमलवरयूं धमलवरयूं ग्मल-वरयूं वरमलवरयूं मर्पस्य गतिन्तस्मं कुरु २ स्वाहा। एतन्मन्त्रद्वयं स्मरयेत्(?) त्रिसन्ध्यं सर्वभयं नाशयति॥ ॐ नमो भगवते श्रीपा-र्श्वनाथाय पद्मावतीसहिताय हिलि २ मिलि २ चिलि २ किलि २ हां हीं हूं हौं हः क्रोन यां २ हंस हुं फट् स्वाहा। सर्वज्वरनाशयन-मन्त्रः॥ ज्वरानन्तरं देवकुलं दर्शयन्नाह। तद्यथा—यमलवरयूं क्षमलवरयूं समलधरयूं नामगर्भितस्य बाह्ये प्रत्येकं हलमलवरयूं वेष्टयेत्। बाह्ये षोडश स्वराः पूरयेत्। तद्बहिरष्टदलेषु कचतट-क्षठयपव ममलवरयूं पिण्डाक्षराणि दातव्यानि। बहिरष्टपत्रेषु ब्रह्माणी कुमारी इन्द्राणी माहेश्वरी वाराही वैष्णवी चामुण्डा गणपतये ॐकारपूर्वं नामान्तं दातव्यम्। तद्बाह्ये यमलवरयूं यः ५ हाः हां आं क्रों क्षीं क्लीं ब्लुं द्रां द्रीं पार्श्वयक्षिणी मात्री ब्रह्माणी दूतिका-सहिते नमः। (आ)वेष्ट्य पूर्वोक्तक्रमेण ककारादिहकारपर्यन्तं पिण्डाक्षराणि विन्दुकलाविभूषितानि वेष्टयेत्। बाह्ये मायाबीजं त्रिधा वेष्टयेत्। यन्त्रत्रयस्य मन्त्रम्—ॐ आं क्रों क्षीं हीं क्लीं ब्लूं हां हीं ज्वालामालिनीं नमः। मूलविद्या अष्टोत्तरशतं निरन्तरं त्रिसन्ध्यं ध्यायमानेन सर्वसिद्धिर्वृद्धिर्लक्ष्मीर्भवति॥

इदानीं प्रथमगाथया कल्पानुसारेण मन्त्रं यन्त्रं च व्याख्याय गाथयाऽनन्तरं अष्टारमष्टवलयारचक्रं सप्रपञ्चमाह—

१ 'नन्तरी दुट्ठ अट्ठार' इति ख-पाठः।

**विसहरफुलिंगमंतं, कंठे धारेइ जो सया मणुओ ।**
**तस्स गह-रोग-मारी—दुट्ठजरा जंति उवसामं ॥ २ ॥**

अस्य व्याख्या—यान्ति—गच्छन्ति। के एते कर्तारः? ग्रह-रोगमारिदुष्टज्वरा इति। आदित्यप्रभृतयोऽष्टाशीतिग्रहपीडा नाशयन्ति रोगा-वातपित्तश्लैष्मिकासयादयः मारि क्षुद्रयन्त्रमन्त्रयोगिनीकृतं महाघोरोपसर्गज्वररुक्प्रभृतयः दुष्टज्वरा अनेकप्रकाराः—दाव(ह)-ज्वर-वातज्वर-पित्तज्वर-विषमज्वर-नित्यज्वर-वेलाज्वर-मुहूर्तज्वरादयः। कं कर्मतापन्नम्? 'उपशामम्'। विनाशं यान्तीत्यर्थः। कस्य? तस्य। यः किं०? आत्मनाऽनुजः(मनुजः—)पुरुषो धारयति—व्यवस्थापयति। कं कर्मतापन्नम्? 'विषधरस्फुलिङ्गमन्त्रं' विषधरस्फुलिङ्गस्य मन्त्रस्तम्। विषधरस्फुलिङ्गमन्त्रोपलक्षणत्वात् तथैकप्रकारं पञ्चनमस्कारचक्रमष्टारमष्टवलयारचक्रमुच्यते। क धारयति? कण्ठे। निरन्तरं एकाग्रमानस(मनसा?) ध्यायमानं सर्वकल्याणसम्पत्कारकमित्यर्थः। कथम्? 'सदा' सर्वकालम्। इति गाथार्थः॥

अस्य भावनाविशेषः। वृद्धसम्प्रदायः—प्रथमं तावदष्टारमष्टवलयारमध्ये हूंकारनामगर्भितस्य बहिरष्टदलेषु ॐ पार्श्वनाथाय ह्रीं नमः संलिख्य दक्षिणपार्श्वे पार्श्वयक्षं संस्थाप्य वामपार्श्वे पार्श्वयक्षिणीं संस्थाप्य बाह्ये चतुर्दिक्षु ॐ ब्रह्मणे नमः, ॐ धरणेन्द्राय नमः, ॐ नागाय नमः, ॐ पद्मावत्यै नमः, संलिख्य बाह्ये षोडश स्वरानावेष्टयेत्। बहिरष्टपत्रेषु ॐ ह्रां श्रीं नमिऊण पासनाहं ३ विसहर ४ वसह ५ फुलिङ्ग ६ ह्रीं नमः संलिख्य, तद्बहिरष्टपत्रेषु ॐ नमो अरिहंताणं ह्रीं

नमः, ॐ सिद्धाणं ह्रीं नमः, ॐ आयरियाणं ह्रीं नमः, ॐ उवज्झायाणं ह्रीं नमः, ॐ नमो लोए सव्वसाहूणं ह्रीं नमः, ॐ ज्ञानाय ह्रीं नमः, ॐ दर्शनाय ह्रीं नमः, ॐ चारित्राय ह्रीं नमः आलिख्य, तद्बाह्ये षोडशपत्रेषु षोडशविद्यादेव्या नामानि, तद्यथा—रोहिण्यै नमः, प्रज्ञप्त्यै०, वज्रशृङ्खलायै०, वज्राङ्कुश्यै०, अप्रतिचक्रायै०, पुरुषदत्तायै०, काल्यै०, महाकाल्यै०, गौर्यै०, गान्धार्यै०, सर्वास्त्रमहाज्वालायै०, मानव्यै०, वैरोट्यै०, अच्छुप्तायै०, मानस्यै०, ॐ ह्रीं महामानस्यै०, नमोऽन्तं सर्वत्र द्रष्टव्यम् । तद्बाह्ये चतुर्विंशतितीर्थङ्करजननीनामानि । तद्यथा—ॐ ह्रीं मरुदेवायै नमः, विजयायै०, सेनायै०, सिद्धार्थायै०, मङ्गलायै०, सुसीमायै०, पृथिव्यै०, लक्ष्मणायै०, रामायै०, नन्दायै०, वैष्णव्यै०, जयायै०, श्यामायै०, सुजसायै०, सुव्रतायै०, अचिरायै०, श्रियै०, देव्यै०, प्रभावत्यै०, पद्मावत्यै०, वप्रायै०, शिवादेव्यै०, वामादेव्यै०, ॐ ह्रीं त्रिशलायै नमः, ॐ नमोऽन्तं सर्वत्र द्रष्टव्यम् । तद्बाह्ये षोडशपत्रेषु—ॐ इन्द्राय नमः, ॐ जयाय ह्रीं नमः, ॐ आग्नेय ह्रीं नमः, ॐ अजिताय ह्रीं नमः, ॐ यमाय ह्रीं नमः, ॐ अपराजिताय ह्रीं नमः, ॐ नैर्ऋत्याय ह्रीं नमः, ॐ जृम्भाय नमः, ॐ वरुणाय नमः, ॐ मोहाय नमः, ॐ वायवे नमः, ॐ वीतरायै (?) ह्रीं नमः, ॐ कुबेराय नमः, ॐ नारायणाय नमः, ॐ ईशानाय नमः, ॐ विजयाय ह्रीं नमः आलिख्य, तद्बहिरष्टपत्रेषु ॐ आदित्याय नमः, ॐ सोमाय नमः, ॐ मङ्गलाय नमः, ॐ बुधाय नमः, ॐ बृहस्पतये नमः, ॐ शुक्राय नमः, ॐ शनैश्चराय नमः ॐ राहुकेतुभ्यो(भ्यां) नमः ।

१–२ 'सर्वेषु' इति ख-पाठः ।

बाह्ये मायाबीजं त्रिगुणं वेष्टयेत् माहेन्द्रमण्डलं वज्राङ्कितं चतुष्कोणेषु क्षिकारमालिख्य अस्य चक्रस्य सम्बन्धिमूलमन्त्रेण ह्रीं श्रीं क्लीं क्रों ग्रों ग्लें ब्लूं अर्हं नमः। ॐ नमो भगवओ अरिहओ। पासस्स सिज्झउ मे भगवइ महाविज्जा उग्गे महाउग्गे जसे पासे सुपासे २ पस्ससमालिनि ठः ३ स्वाहा। एयाए विज्झाए गामं नगरं पट्टणं कव्वडं घरं खित्तं विवरं कुट्टागारं बहुइ [1]कंमवासिधूयं दायं वा खेमं सिवं नीरोगं माणुसं बहुदव्वं सुपीगा सुखावहेवरु ॐ वस्माएविसपुत्ति सवाहणि सअपरिकरं मज्जं आगच्छ २ अत्र स्थाने तिष्ठ स्वाहा।

आह्वानमन्त्रानन्तरं द्वितीयं बृहच्चक्रं कल्पानुसारेण चिन्तामणिनामचक्रस्य सम्बन्धि विस्तारेण बीजाक्षरं दर्शयन्नाह—अष्टारमष्टवलयारमध्ये ॐ ह्रीं श्रीं वां हं हूं क्षूं ह्रीं वां ह्रीं श्रीं ॐ वां

ऐं ह्रीं वां क्षीं ह्रीं वाहं सं वमलवरयूं वा मध्यभागे हुंकारे नामगर्भितमालिख्य बाह्ये चतुर्दलेषु पार्श्वनाथं संलिख्य बाह्ये ह्रींकारं (सं)वेष्ट्य त्रिगुणं बहिरष्टकोणोपेतं चक्रमालिख्य कोणेषु ब्रह्माणं च ममलवरयूं धरणेन्द्राय धमलवरयूं नागान् नमलवरयूं संलिख्य पद्मावतीं यमलवरयूं संलिख्य बाह्ये ह्रीं ॐ हः २ ह्रदेवत्राभयहरन्नान्न ॐ ह्रीं(त्रीं?) सं हं सः यः २ क्षिप स्वाहा। ह्रीं ह्रौं संवेष्ट्य बाह्ये षोडशकमलमध्ये षोडश स्वरान् संलिख्य प्रथममध्यदले ह्रौं २ संलिख्य ऊर्ध्वभागे दलाग्रे ॐ ह्रीं श्रीं नमिऊणपासनाहविसहरवसहजिणफुलिंग ह्रीं श्रीं नमः। पुनरपि बाह्ये कमलमध्येषु ॐ नमो अरिहंताणं ह्रीं नमः, ॐ नमो उवज्झायाणं ह्रीं नमः, ॐ सिद्धाणं ह्रीं नमः, ॐ नमो आयरि-

---

१ 'कमचाभिधूय दायं वा खेम त्ति य नीरोग सानुस' इति ख-पाठः।

याणं ह्रीं नमः, ॐ नमो लोए सव्वसाहूणं ह्रीं नमः, ॐ नमो ज्ञानाय ह्रीं नमः, ॐ दर्शनाय ह्रीं नमः, ॐ चारित्राय ह्रीं नमः, विदिगारेषु [ॐ] उवसग्गहरं पासं १ पासं २ वंदामि ३ कम्मघणमुक्कं ४ विसहर ५ विसनिन्नासं ६ मङ्गलकल्लाण ८ आवासं स्वाहा इति संलिख्य, ततो बाह्ये अनन्तकुलिकवासुकिशङ्खपालतक्षककर्कोटपद्ममहापद्म ॐकारं पूर्वं नामान्तमालिख्य विदिगारेषु ॐ विसहरफुलिंगमंतं १ कण्ठे धारेइ २ जो सया ३ मणुओ ४ तस्स गह ५ रोगमारी ६ दुट्ठजरा जंति ७ उवसामं ८ स्वाहा संलिख्य पुनरपि बाह्ये षोडशविद्यादेव्या नामानि षोडशदलेषु ऐं ह्रीं क्लीं रोहिण्यै नमः सर्वेषु द्रष्टव्यानि । पुनरपि बाह्ये तीर्थङ्करजननीनामानि मरुदेव्यादीनि दलेषु प्रत्येकं २ ॐ ह्रीं नमोऽन्तं संलिख्य बाह्यदलेषु प्रत्येकं २ इन्द्राग्नियमनिर्ऋतवारुणवायव्यकुबेरईशाननागात् ब्रह्माणं ॐकारपूर्वं नमोऽन्तं संलिख्य विदिगारेषु चिट्ठउ १ दूरे मंतो २ तुज्झ पणामो वि ३ बहुफलो होइ ४ नरतिरिएसु ५ वि जीवा ६ पावंति न दुक्खदोहग्गं ७ स्वाहा इति संलिख्य बाह्ये चतुर्विंशतिदलेषु आदित्य-जया, सोम-अजिता, मङ्गल—अपराजिता, बुध-जम्भा, बृहस्पति-मोहा, शुक्र-गौरी, शनैश्चर-गान्धारी, राहु-केतू संलिख्य विदिगारेषु तुह संमत्ते लद्धे १ चिन्तामणि २ कप्पपायवब्भहिए ४ पावंति ५ अविग्घेणं ६ जीवा अयरामरं ठाणं ८ स्वाहा संलिख्य उं (ॐ ?) वामादेवि [1]महाविहणिसपरिकरिसहि आगच्छ २ अत्र स्थाने तिष्ठ २ स्वाहा । मायाबीजं त्रिगुणं (सं)वेष्टय माहेन्द्रवज्राङ्कितस्य तु चतुष्कोणेषु क्षिकारि देयं चक्रं कुङ्कुमगोरो-

१ 'महाविहा वाहणि' इति ख-पाठः ।

चनया सुगन्धद्रव्यैर्भूर्जपत्रे संलिख्य श्वेतवस्त्रचन्दनाभरणादिनिरन्तरैः त्रिसन्ध्यं ध्यायन् अष्टोत्तरशतपुष्पैर्जापः क्रियते सर्वसम्पत्करणं चक्रं कुङ्कुमगोरोचनया सुगन्धद्रव्यैर्भूर्जपत्रे संलिख्य कण्ठे धारणीयम् । सर्वभयरक्षां करोति । द्वितीयचक्रमिति ।

इदानीं चिन्तामणिवृक्षचक्रानन्तरं शुभाशुभं यन्त्रं सप्रपञ्चमाह—

चिट्ठउ दूरे मंतो तुज्झ पणामो वि बहुफलो होई ।
नरतिरिएसु वि जीवा पावंति न दुक्खदोहग्गं ॥ २ ॥

अस्या व्याख्या—तिष्ठतु—आस्तां दूरे-व्यवहितदेशे रमणीयमित्यर्थः । पञ्चनमस्कारसम्बन्धी ॐ ह्रीं ह्रं नमो अरिहंताणं ह्रीं नमः । त्रिसन्ध्यं निरन्तरं अष्टोत्तरशतश्वेतपुष्पैरेकान्तस्थानेन जापेन क्रियमाणेन सर्वसम्पत्करी लक्ष्मीर्भवति । अथवा ध्यायेत (ध्यानेन?) हरहासकाशशङ्खगोक्षीरहारिणी(णा) हारकुन्देन्दुधवलनिबद्धं हृत्पुण्डरीके मनसि धृत्वा धारणं सञ्जाता तत्प्रत्येकान्तासमापूरितध्याननिरुद्धाः करणवृत्तयः आविर्भूतस्वरूपाः । पुण्य इवार्थनिष्भासः सञ्जातसमाधिविहितो अमूर्धानाहतु संयमक्षतमन्तमूर्धानं त्रिकालं सर्वसम्पत्करी ईप्सितफलदायिनी सर्वकल्याणकारिणी ध्यानमित्युच्यते । तव—भवतः प्रणामः—प्रह्वीभाव इत्यर्थः । बहुफलः—प्रचुरफल इत्यर्थः । भवति—विद्यते । नरा-मनुष्याः तिर्यक्ष्वपि जीवाः—प्राणिन इत्यर्थः । प्राप्नुवन्ति—आसादयन्ति न दुःखदौर्भाग्यमिति पीडाभव्योभयमिति गाथार्थः । अपिशब्देन समुच्चयार्थः ।

यन्त्रं सूच्यते । अस्य भावमाह—ह्रींनामगर्भितस्य बहिरष्ट-

---

१ 'डालभव्योभभय०' इति ख पाठः ।

दलेषु ह्रीं क्लूं ह्रीं ४ देवदत्तं ४ दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनादिसुगन्धद्रव्यैर्भूर्यपत्रे संलिख्य नारीबाहौ धारणीयम् । वन्ध्या गुर्विणी भवति, मृतवत्सा गर्भं धारयति, काकवन्ध्या प्रसवति, सर्वभूतपिशाचरक्षा (च) भवति । वंकारनामगर्भितस्य बाह्ये षोडश स्वरान् वेष्टयेत् । ॐ ह्रां ह्रीं चामुण्डे ! स्वाहा । आवेष्टय बाह्ये वलं २ पूरयेत् । एतद् यन्त्रं तु कुङ्कुमादिसुगन्धद्रव्यैः भूर्जपत्रे संलिख्य बाहौ धारणीयम् । बालग्रहरक्षा भवति । मायाबीजत्रिगुणं नामगर्भितस्य बहिरष्टदलेषु ह्रीं दे इ दातव्यम् । एतद् यन्त्रं भूर्जे कुङ्कुमगोरोचनया आलिख्य स्त्रीपुरुषबाहौ धारणीयम् । सौभाग्यं भवति । वांकारं नामगर्भितस्य बहिश्चतुर्दलेषु वंकारं दातव्यम् । बहिरष्टपत्रेषु रकारं दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे संलिख्य(ते) क्षुद्रोपद्रवोपसर्गदोषा उपशाम्यन्ति[1] । आ(वै?)रोट्यानामविद्यां ह्रींनामगर्भितस्य[2] बहिरष्टपत्रेषु देयं हमल्व्र्यूं ह्रीं दातव्यम् । एतद् यन्त्रं गोरोचनया° भूर्जपत्रे संलिख्य कण्ठे हस्ते वा बद्ध्वा चौरभयं न भवति । अघोरा नाम विद्या । ह्रींकारनामगर्भितस्य बहिरष्टदलेषु मायाबीजं दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे संलिख्य बाहौ धारणीयम् । सौभाग्यं भवति । मायागर्भितस्य बहिरष्टपत्रेषु ह्रींकारं दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे संलिख्य बाहौ धारणीयम् । सर्वजनप्रियो भवति । मायानामगर्भितस्य बहिरष्टपत्रेषु रकारं दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे विलिख्य (ते) बालानां शान्तिपुष्टिकरी रक्षा भवति । मायाबीजं नामगर्भितत्रिगुणं (सं)वेष्ट्य बहिरष्टपत्रेषु ह्रींकारं दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे आलिख्य कण्ठबाहुभ्यां धारयेत् । आयुषः अपाश्रितज्वरभूतपिशाच-

१ 'उपशमयन्ति' इति ख-पाठः । २ 'विदर्भितस्य' इति ख-पाठः ।

स्कन्दोपस्मारग्रहगृहीतस्य बन्धे तत्क्षणादेव शुभं भवति । ह्रां [ह्रीं] श्रीं ह्रीं श्रीं ह्रीं नामगर्भितस्य बाह्ये षोडशपत्रेषु ह्रीं श्रीं ठकारं दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे विलिख्य दुर्भगनारीणां सौभाग्यं करोति ।

इदानीं पञ्चनमस्कारस्मरणीयफलं सप्रपञ्चमाह—

**तुह संमत्ते लद्धे, चिंतामणिकप्पपायवब्भहिये ।**
**पावंति अविग्घेणं, जीवा अयरामरं ठाणं ॥ ४ ॥**

व्याख्या—'प्राप्नुवन्ति' लभन्ते । के ते कर्तारः ? 'जीवाः' प्राणिनः । कं कर्मतापन्नम् ? 'अजरामरं स्थानं' शाश्वतं धवलं गोक्षीरकुन्देन्दुशङ्खहरहारसंकाशं सिद्धिक्षेत्रं रमणीयमित्यर्थः । पुनरपि कथम्भूतम् ? 'अविघ्नेन' निर्विघ्नेन । कस्मिन् ? 'तुह सम्मत्ते लद्धे' तव सम्यक्त्वे लब्धे सति—सम्यग्दर्शने प्राप्ते । कीदृशे ? 'चिन्तामणिकल्पपादपाभ्यधिके' चिन्तारत्नानेकप्रकारार्णववज्रवैडूर्यमहानीलकर्केतनपद्मरागमरकतपुष्परागचन्द्रकान्तरुचकमेचकाद्यनर्घेयरत्नराशिपरिपूरितावित्यर्थः । कल्पवृक्षसुसमधिके दश प्रकारा दृश्यन्ते । उक्तं च—

"चत्तारि सागरोवम[1]कोडाकोडीणं संतईकाले ।
एगंतसुसमा खलु जिणेहिं सव्वेहिं निद्दिट्ठा ॥ १ ॥
तीय पुरिसाणमाऊ तिन्नि उ[2] पलियाइ तह प[3]रीमाणं ।
तिन्नेव गाउआइं आइए भ[4]णइ समयन्नू ॥ २ ॥

---

१ 'कोडिकोडीउ संतईए उ एगंत सुस्समा' इति पाठोऽवतारितो नन्दीसूत्रस्य श्रीमलयगिरिसूरिकृताया वृत्तौ १९६तमे पत्रे । २ 'य', ३ 'पमाणं च', ४ 'भणंति',

इत्यादयः कस्य सम्बन्धी(धिनः) न भवन्ति इति गाथार्थः ॥ ४ ॥

इदानीं स्तुतेः उपसंहारमाह—

**इय संथुओ महायस ! भत्तिब्भरनिब्भरेण हियएण ।**
**ता देव [1]दिज्ज बोहिं, भवे भवे पासजिण[2]चंद ! ॥ ५ ॥**

व्याख्या—संस्तवः–संस्तवनम् । कोऽसौ ? महायशः–महाकीर्तिः । पुनरपि कथम्भूतेन ? 'भक्तिभरनिर्भरेण हृदयेन' बहुमानसमन्वितेन चेतसा । कथमिति ? अमुना प्रकारेण पर्यन्तं शान्तिकपौष्टिकयन्त्रमन्त्र उच्यते । तस्मादेव हि बोधिः । यस्मादेवं तस्माद् वेति । देव तं कर्मतापन्नं । बोधिः–सम्यक्त्वं भवेत् पार्श्वजिनचन्द्र । जन्मनि जन्मनि हे श्रीपार्श्वनाथ ! स्वामिनो नामग्रहणेन क्षुद्रोपद्रवनाशनमिति गाथार्थः ॥

---

उपभोगपरीभोगा जन्मान्तरसुकृतबीजजातास्तु ।
कल्पतरुसमूहाद् भवन्ति क्लेशं विना तेषाम् ॥
ते पुनर्दशप्रकारा निर्दिष्टाः श्रमणसमयकेतुभिः ॥
धीरैः कल्पतरवः ... .... एते ॥
मत्ताङ्गदाश्च भृङ्गास्त्रुटिताङ्गा दीपज्योतिश्चित्राङ्गाः ।
चित्ररसा मण्यङ्गा गेहाकाराश्चानिताक्षाः ॥
मत्ताङ्गदेषु मद्य सुखपेय भाजनानि भृङ्गेषु ।
त्रुटिताङ्गेषु च सङ्गतत्रुटितानि बहुप्रकाराणि ॥
दीपशिखा ज्योतिर्नामकाश्च नित्य कुर्वन्ति उद्द्योतम् ।
चित्राङ्गेषु च माल्य चित्ररसा भोजनार्थके ॥
मण्यङ्गेषु च भूषणवराणि भवनानि भवनवृक्षेषु ।
अनियतेषु निजप्रस्तववस्त्राणि बहुप्रकाराणि ॥
एतेषु चान्येषु च नरनारीगणाना भाजनवसुभोगा ।
भविकपुनर्भवरहिता इति सर्वज्ञा जिना ब्रुवते ॥

१ 'देसु बोहिं' इति पाठान्तरम् । २ 'चंदो' इति ख-पाठः ।

अस्य भावमाह—चक्रं द्वयः, क्षिनामगर्भितस्य बहिः ठकारं वेष्टयेत्। बहिः षोडश स्वरानावेष्टय बहिरष्टदलेषु पार्श्वनाथाय ह्रीं श्रीं स्वाहा। बाह्यद्वादशपत्रेषु हर २ दानव्यम्। बाह्ये क्लीं क्ष्वीं हं सः वेष्टयेत् । बाह्ये हकारं युगसम्पुटस्थं बहिः पवर्णं युग्मसम्पुटस्थं बहिः ह्रींकारं त्रिगुणं वेष्टयम्। एतद्यन्त्रस्य तन्त्रं ॐ ह्रँ वं ह्वां पक्षि ह्रीं क्ष्मीं हं सः स्वाहा। एतन्मन्त्रेण श्वेतपुष्पैरष्टोत्तरशतप्रमाणं दिनत्रयं यन्त्रं पूजयेत्। शान्तिकपौष्टिकज्वररुक्शाकिनीभूतप्रेतराक्षसकिन्नरप्रभृतीन् नाशयति। यन्त्रं शुभद्रव्यैः भूर्जपत्रे संलिख्य कुमारीसूत्रेणावेष्ट्य बाहौ धारणीयम्। सर्वकल्याणसम्पत्कारि यन्त्रं भवति ॥ द्विजपार्श्वदेवगणिविरचिते यत् किमपि ( विरुद्धं ) श्रीधरणेन्द्रपार्श्वयक्षपद्मावतीप्रमुखाभिः स्वदेवताभिर्मम क्षमितव्यमिति। यच्च किञ्चिद् विरूपं मन्त्रमितः सर्वस्य मिथ्यादुष्कृतमिति॥

इति उपसर्गहरस्तोत्रस्य वृत्तिरियम् ॥ छ ॥ श्रीरस्तु ॥ मधुरं ॥ छ ॥ श्री ॥



---

१ 'रु यत्रं मंसित (?)' इति ख-पाठः ।

२ 'वृत्तिः समाप्ता ॥ संवत्सरे विक्रमनृपतौ महा-नन्द-काय-भू ( १९९७ )-युते वर्षे आश्विनमासे शुभ्रपक्षे दुर्गाष्टम्या तिथौ लिखितं जगजीवनर्षिणा स्वात्महेतवे। कल्याणमस्तु। भव्य भवतु।

अक्खरमत्ताहीणं जं मया लिहियं अयाणमाणेणं।

तं ( ख )मह मुज्झ सामी जिणंदमुहनिग्गया वाणी ॥ १ ॥

शालदुर्गे स्थिते सति लेप( ख )क-पाठकयोर्जयः' इति ख-पाठः ।

क-परिशिष्टम् ।

# अन्तर्कथासु

## १ रङ्कश्रेष्ठिकथानकम् (पृ० ११)



मरुस्थल्यां 'पल्ली'ग्रामे काकू-पाताकौ भ्रातरौ। तयोः कनीयान् धनी । ज्यायांस्तु निःस्वत्वेन तद्गृहे भृत्यवृत्त्या निर्वहते । एकदा वर्षारात्रौ दिवसकर्मपरिश्रान्तः काकूयाको रात्रौ प्रसुप्तः । पाताकेनाभिदधे—भ्रातः ! स्वकेदाराः पयःपूरैः स्फुटितसेतवः, तव तु निश्चिन्तता इत्युपालब्धः स तदा त्यक्तस्रस्तरः स्वं दरिद्रिणं परगृहकर्मकारिणं निन्दन् कुद्दालं लात्वा यावत् तत्र याति तावत् कर्मकरान् स्फुटितसेतुबन्धरचनापरान् दृष्ट्वा के यूयमिति पृष्टाः, भवद्भ्रातुः कामुका इति तैरुक्ते क्वापि मदीयास्ते सन्ति ? इति पृष्टे 'वलभी'पुर्यां सन्तीति ते प्राहुः ।

अथ कालक्रमेण प्रस्तावं प्राप्य वलभ्यां गतः सकुटुम्बः । तत्र गोपुरासन्नवास्याभीराणां सन्निधौ निवसन् अत्यन्तकृशतया तैः 'रङ्क' इति दत्ताभिधानस्तार्णमुटजं कृत्वा तेषामवष्टम्भेनाट्टं मण्डयित्वा तस्थौ ।

एकदा कश्चित् कार्पटिकः कल्पप्रमाणेन 'रैवत'शैलादलाबुना सिद्धरसमादाय मार्गे 'काकूतुम्बडी'ति सिद्धरसादशरी-

---

१ एतत् कथानकं श्राद्धगुणविवरणे पञ्चमे षष्ठे च पत्राङ्के मुद्रितं वर्तते । तदाधारेणात्र दीयते ।

रिणीं वाणीं निशम्य जानश्री'चन्द्रश्री'पतिरिव तस्य गन्धर्वतो
वणिजः सन्निधि तद्वात्मानुमन्त्र्योपनिषीतवं । स स्वयं सोमनाथ-
यात्रार्थं गतः ।

कस्मिन्नपि पर्वणि पाकविशेषाय नृड्निर्योजितायां नापि-
तायामलानुरूपात् गलितकरबिन्दुना शिवमर्दां निशाम्य स
तणितां तं मिष्टकं निर्णीय तद्ग्लानुमतिर्नं गृहागमनस्य स्थाप-
यित्वा स्वगृहं प्रस्थापितवान्. अपरस्मिन् शोधूमे घृतं क्रेतुं
स्थितः । तत्र नितरां प्रागल्भ्यकरणकारिण्याः स्वयं घृतं नीत-
वेस्तदक्षीणतादर्शनाद् घृतपात्राधः कृष्णचित्रकुण्डलिकां निश्चित्य
केनापि छद्मना तां गृहीतवान् । एवं कपटकूटतुलामानव्यवहार-
दिभिः पापानुबन्धिपुण्यबलेन व्यवसायपरस्य बहुश्रेष्ठिनो मिलितं
बहु द्रव्यम् ।

एकदा कश्चित् स्वर्णसिद्धिकर्ता मिलितः । सोऽपि कपटबुद्ध्या
वञ्चितः । गृहीता सुवर्णसिद्धिः । एवं त्रिविधसिद्ध्याऽनेककोटि-
धनेश्वरो जातः, परमन्यायार्जितविभवपरिशीलनेन पूर्वं निर्धनस्य
पश्चाद् धनसम्पत्त्युत्सेकतया च क्वापि तीर्थे सत्पात्रेऽनुकम्पास्थाने
वा स्वश्रियो न्यासो दूरे तिष्ठतु, प्रत्युत सकललोकोच्चाटननवनव-
करवर्द्धनाहङ्कारपोषान्यधनिस्पर्द्धामत्सरादिभिस्तां रमां काल-
रात्रिरूपां लोकायादर्शयत् ।

अथान्यदा स्वसुतारत्नखचितकङ्कतिकायां राज्ञा स्वपुत्रीकृते
मार्गितायां पश्चात् प्रसभमपहृतायां तद्विरोधात् स्वयं म्लेच्छ-
मण्डले गत्वा कनककोटीर्दत्त्वा मुद्गलान् समानयत् । तैर्देशभङ्गे
कृते रङ्केन राज्ञः सूर्यमण्डलागच्छत्तुरगरक्षकान् कारिवितरणैर्वि-
भिद्य कूटप्रपञ्चः कारितः ।

पुरा हि राजा सूर्यवरप्रासं दिव्यतुरङ्गमारोहति; तदनु सङ्केतितपुरुषैः पञ्चशब्दवादनं क्रियते। तुरगो व्योम्नि याति, तमारूढो नृपो वैरिणो हन्ति। सङ्ग्रामसमाप्तौ तुरगः सूर्यमण्डलं प्रविशति। तदा च रङ्कभेदितपञ्चशब्दवादकै राज्ञस्तुरगारोहणात् पूर्वमेव पञ्चशब्दनादः कृतः; तुरगः समुड्डीय गतः। शिलादित्यनृपः किंकर्तव्यतामूढस्तैर्निजघ्ने। तदनु सुखेन वलभीभङ्गः सूत्रितः।

उक्तं च—

"पणसयरी वाससयं(मं) तिण्णि सयाइं(३७५) अइक्कमेऊणं।
विक्कमकालाउ तओ वलहीभंगो समुप्पन्नो ॥ १ ॥"

मुद्गला अपि रणे पातयित्वा मारिताः।

---

१ छाया—

पञ्चसप्ततिवर्षैः समं त्रीणि शतानि अतिक्रम्य।
विक्रमकालात् ततो वलभीभङ्गः समुत्पन्नः॥

## २ [1]बुद्धिचतुष्टयकथा (पृ० १४, श्लो० ५०)



'वसन्त'पुरे कश्चित् श्रेष्ठी सभार्यः परिवसति। तद्गृहे पुत्रः समजनि। पिता जन्मोत्सवमकरोत् (प्रादाच्च गुणाकरेति नाम)। स क्रमेण यौवनं प्राप। पित्रा परिणायितः पञ्चप्रकारान् विषयान् भुङ्क्ते स्वं ददाति च इत्थं विलसति।

अन्यदा पश्चिमरात्रौ सुप्तोत्थितश्चिन्तयति—अहो अहं वासिनं भुञ्जे, अतो देशान्तरे गत्वा स्वभुजोपार्जितं द्रव्यं भोक्ष्ये। इति चिन्तयित्वा पप्रच्छ पितरौ। ततस्तौ वदतः—वत्स! गृहे एव स्थितः सन् पूर्वजोपार्जितं द्रव्यं विलस, देशान्तरे मा गम इति पितृभ्यां निषिद्धः। ततः कियद्दिनानि स्थित्वाऽन्यदा द्रम्म-सहस्रदशकं गृहीत्वा पितरौ अपृष्ट्वा एकाकी स देशान्तरं गन्तुकामः स्वपुरान्निर्ययौ। यावता कियन्मार्गं जगाम तावन्मार्गे कश्चिद् द्विजो मिलितः। तावुभौ गच्छतः।

अन्यदा श्रेष्ठिपुत्रेण द्विजोऽलापि—भोः! कामपि कथां कथय यथा पन्थाः सूल्लङ्घ्यः स्यात्। तेनोक्तम्—भद्र! ममोक्तिर्द्रव्यं विना न प्राप्यते। तर्हि कियद् विलोक्यते?। विप्रः प्राह—द्रम्म-

---

१ दक्षिणविहारिमुनिरत्नश्रीअमरविजयसत्कहस्तलिखितप्रत्याधारेण दीयतेऽत्र कथेयम्। २ पञ्चशत्या एकैका बुद्धिर्गृहीता इति मूलकथायाः (पृ० १४)

सहस्रम्। श्रेष्ठिपुत्रेण स्वग्रन्थितः सहस्रमेकं निष्कास्य ददे। ततो भूदेवोऽवादीत्–'मार्गे एकाकिना न गन्तव्यम्, योऽपि सोऽपि द्वितीयः साहाय्यो ग्राह्यः' इत्युक्त्वा मौनी स्थितः। पुनः पृष्टो विप्रस्तेनोचे—हे श्रेष्ठिपुत्र! तथैव द्रम्मसहस्रद्वयीं विना न वदामि। तेन सा तथैव दत्ता। विप्रः प्रोवाच—'नगरे भुक्त्वा प्रवेष्टव्यम्'। पुनरेव तथैव तृतीया बुद्धिर्याचिता। विप्राय त्रिसहस्री दत्ता। विप्रेणोक्तम्–'यत् पञ्च जना भव्यमभव्यं वा कथयन्ति तत् कर्तव्यम्' इत्युक्त्वा मौनं कृतवान्। पुनरपि तथैवार्थितो विप्रः प्राह—चतुःसहस्रम्। दत्ते चतुर्थीं बुद्धिमुवाच—'मार्गं विहाय सुप्यते भुज्यते च'। इति बुद्धिचतुष्टयमादाय वणिक्पुत्रश्चचाल। तदा विप्रो बभाण—शृणु भद्र! चतसृणां बुद्धीनां मध्ये एकाऽप्यसत्या भवेत् तदा झटित्यागत्य स्वं स्वं ग्राह्यम्, इति न चिन्त्यं यदनेन मुषितोऽहम्। अन्यच्च—यदा कदाचन तव सङ्कटं स्यात् तदा मम कथनीयं यथा निस्तारयामीति वदन् विप्रस्तं मुत्कलाप्य स्वग्रामाध्वनि चलितः। सोऽपि श्रेष्ठिपुत्रः कियल्लङ्घितमार्गश्चिन्तयति स्म—यद् भणितं क्रियते–'पथि एकाकिना न गम्यते'। तर्हि साम्प्रतं न कोऽप्यत्र दृश्यते, तदैकत्र पतितं जाहकजीवमवलोक्य तमेव ग्रन्थौ बद्ध्वा द्वितीयं साहाय्यं मन्यमानः स कुत्रापि सरसि स्नात्वा वटतले ग्रन्थिं छोटयित्वा सुप्तः। ततस्तस्मिन् निद्राणे वटवृक्षमूलाद् दुष्टः सर्पो निःसृतः (स) सर्पो जाहकेन विनाशितः। क्षणेन श्रेष्ठिपुत्रो विनिद्राणः तं सर्पं विनष्टं निरीक्ष्य चमत्कृतश्चेतसि चिन्तयति—अहो फलिता तस्यैका मतिः; यदाऽयं सहायी न स्यात् तदा कुतो मे जीवितप्राप्तिः ?।

ततः स हृष्टमना द्वितीयां बुद्धिं परीक्षितुकाम एकस्मिन् नगरे गच्छन् 'ग्रामे भुक्त्वा प्रवेष्टव्यम्' इत्यतो भोजनं कृत्वा पुरान्तर्गतः। तत्र पुरे मातुलोऽस्ति। तद्गृहे स यावत् प्रविशति तावदग्रे सर्वेऽपि मातुलादयो रुदन्तः सन्ति। तेषां कोऽपि दिवं ययौ इति सोऽपि श्रेष्ठिपुत्रः सन्ध्यां यावत् तैः सह क्षुधार्तः स्थितः, सन्ध्यायां किञ्चित् भुक्त्वा चिन्तयति—चेदत्र बुभुक्षित एवागतोऽभवं तदा कथं मम सत्काले भोजनं स्यात्? परं तेनोक्ता द्वितीयाऽपि बुद्धिः सत्याऽभवत्।

तत्र कियद्दिनानि स्थित्वाऽग्रतश्चलितोऽन्यस्मिन् नगरान्तरे जगाम। तत्राऽपि तृतीयां बुद्धिं परीक्षितुकामः चतुष्पथे गतः। तत्र वणिक्पुत्राः पञ्चषाः चिन्तयन्तः सन्ति—एकस्याट्टे कश्चित् कार्पटिकः सुप्तो मृतः, तन्निष्कासनार्थं पञ्चाशद् द्रम्मान् सम्मील्य तं श्रेष्ठिपुत्रं दृष्ट्वा तत्समीपं गत्वेति वदन्ति स्म—भो पथिक! इमं मृतं कार्पटिकं इतो हट्टात् दूरीकुरु, तुभ्यं वयं ५० द्रम्मान् दास्यामः। तेनापि चिन्तितम्—धिग् ईदृशं कर्म नोचितं सतां, परं स्वगुरुकथितां तद्बुद्धिं परीक्षितुं ५० द्रम्मान् लात्वा, तं कार्पटिकं रज्जुना बद्ध्वा कुत्राऽपि गर्तायां यावत् क्षिपति, तावत् तत्कच्छोटकमध्ये कुप्यस्थेलिकां दृष्ट्वा सविस्मयस्तां गृहीत्वा पश्यति स्म। स तत्र पञ्च रत्नानि लक्षलक्षमूल्यानि विलोक्य तानि लात्वा मनसीति दध्यौ—यदसौ कपटवेषधारी कोऽपि महर्द्धिकोऽभूत्, नहि अन्यस्य पार्श्वे एतानि सम्भवन्ति, इत्थं मम तृतीयाऽपि बुद्धिः सफला जाता।

पश्चात् तत्पुरे एकं रत्नं विक्रीय भाटकेन गृहं लात्वा सुखेन

तिष्ठति, वाणिज्यं करोति। क्रमेण वहु द्रव्यमर्जितम्। धनेन प्रसिद्धोऽजनि।

अन्यदा कश्चिदारामिकः कर्कटीबीजानि तस्मै श्रेष्ठिपुत्राय प्राभृतीकृतवान्। तेनोक्तम्—हे मालिक! किमेतत् प्राभृतकम्?। मालिको विज्ञपयति—स्वामिन्! एतेषां बीजानां प्रभावः साधीयानस्ति, श्रयताम्—एतानि प्रातरुप्यन्ते मध्याह्ने प्रफल्यन्ते, वालुक्योऽपराह्णे लूयन्ते भक्ष्यन्ते च। श्रेष्ठिपुत्रेणोचे—न सत्यमेतत्। तदा मालिकः पुनरपि प्राह—तर्हि परीक्षा क्रियतां; चेन्ममोक्तं सत्यं स्यात् तदा ममोचितं देयं, नान्यथा। श्रेष्ठिपुत्रेणापि तथैव विदधे, साध्यसिद्धिः समजनि। तेन तुष्टेन टङ्कशतद्वयं दत्त्वा स प्रमोदितः। बीजानि स्वपार्श्वे स्थापितानि। एवं यान्ति दिनानि सुखेन।

अन्यदा तत्स्वजनैस्तस्य नामाङ्कितो लेखः प्रैष्यत, तं वाचयति स्म। तत्रेति लिखितमस्ति—यत् तव पितरौ त्वद्विरहज्वरातुरौ परलोकमलङ्कृतुः, त्वद्भार्या चैकाकिनी निर्मर्यादा विद्यते, गृहं च सर्वं विलसितम्। इति वृत्तान्तं ज्ञात्वा स श्रेष्ठिसूनुर्भृशं रुरोद, दुःखं च महद् दधौ, धिग् अहं पुत्रः, यत्पितृभ्यां मरणावसरे ममाऽऽस्यमपि न दृष्टम्, तस्मात् स्तोकदिनान्तः स्वपुरं प्रति चलिष्यामि इति हृदि ध्यात्वा सर्वं वस्तु विक्रीय रत्नान्येव गृहीत्वा तानि बीजानि चेति सारवस्तुग्रन्थिं प्रच्छन्नीकृत्य कार्पटिकवेषेण एकाक्येव चचाल स्वपुरं प्रति।

कियन्तं मार्गमुल्लङ्घ्य श्रान्तोऽवस्थानं चिन्तयति स्म—तदानीं पुनरपि स्वगुरुदत्तां बुद्धिं चतुर्थीं स्मरति स्म, यत् तेन भणितमासीत्—'मार्गं विहाय कुत्रापि प्रच्छन्नत्वेन स्थीयते' इति

विमृश्य पन्थानं मुक्त्वा तस्थौ, एकान्ते तत्र भुक्त्वा स्वेच्छया सुप्त्वाऽग्रे गच्छति स्म। यावत् कियान् मार्ग उल्लङ्घितस्तावत् स्ववस्तुग्रन्थि भोजनस्थाने विस्मृतं सस्मार, ततः स हृतसर्वस्व इव तत्क्षणात् व्यावृत्त्य तस्मिन् स्थाने ययौ। अग्रे स ग्रन्थिस्तथैवास्ति। केनाऽपि न जगृहे। सोऽपि तं लात्वा हृदि हृष्टश्चिन्तयति स्म, धन्यः स मे गुरुः। यद्यहमस्मिन्नेवाध्वनि जनायातयातसङ्कुले स्थितोऽभूवं तदा कथमेतस्य ग्रन्थेः प्राप्तिः स्यात्? परं यत् तदीया तुरीया बुद्धिर्मया कृता साऽपि मे चेतश्चमत्कारकारिणी जाता। इति विमृशन् स्वनगरं प्राप, क्रमेण गृहं प्रविवेश। स्वजनादयो मिलिताः सम्भाषितं कलत्रं प्रच्छन्नम्।

अन्यदा प्रच्छन्नभूतो ग्रन्थिस्तस्यै स्वभार्यायै दर्शितः। तयाऽपि गृहीत्वाऽसौ गृहान्तर्मुक्तः। ततः स श्रेष्ठिपुत्रः स्वस्वजनसहितः कमपि वस्तुसमूहं लात्वा नृपं भेटयति स्म। राजाऽपि तुष्टः सन् जगाद—भद्र! कुत्रापि देशान्तरे भ्रमता त्वया किमप्याश्चर्यकारि वस्तु लब्धं श्रुतं वेति? तदा श्रेष्ठिसूनुर्वदति स्म—राजन्! मयाऽपूर्वाणि चिर्भटीबीजानि प्राप्तानि सन्ति, तेषामाश्चर्यं महत्। तदा राज्ञा विस्मितेनाभाणि—तदाश्चर्यकारणं कथम्? स प्राह—एतानि प्रातरुप्यन्ते तस्मिन्नेव दिने कर्कटीफलानि भुज्यन्ते चेति निगद्य स्थिते श्रेष्ठितनये मन्त्री तद्भार्यासक्तचित्तो वदति स्म—राजन्! असत्यमेतत्, अयमर्थो न घटते। श्रेष्ठिपुत्रेण जगदे—स्वामिन्! सत्यमेवास्ति, परीक्षा क्रियताम्। मन्त्रिणाऽप्यभाणि—नरेश्वर! यदि एतदुक्तं न भवति, तदा को दण्ड एतस्य?। राज्ञोक्तम्—त्वमेव भण। ततो मन्त्रिणा मुदितमनसा पणश्चक्रे—यदि श्रेष्ठिपुत्रोक्तं न स्यात्, तदाऽस्य गृहे यन् मया

द्वाभ्यां हस्ताभ्यां गृह्यते तन्मदीयमेव । यदि मया हार्यते तदाऽनेनेति प्रतिज्ञा चक्रे। तदा स दुरात्मा मन्त्री शीघ्रमेव श्रेष्ठि-गृहं गत्वा तस्य भार्यासकाशाद् बीजानि याचितानि, तयाऽपि मन्त्र्यासक्तचित्तया ग्रन्थितस्तानि निष्कास्य तस्मै दत्तानि; तत्रान्यानि क्षिप्तानि। श्रेष्ठिसूनुरप्यज्ञाततद्भावः स्वगृहे आगतः।

द्वितीयेऽह्नि कृतप्रतिज्ञौ द्वावपि नृपमन्दिरं गतौ। तत्र सभा-समक्षमज्ञाततद्भावेन श्रेष्ठिपुत्रेण बीजवपनं कृतम्। प्रहराणां द्वयं त्रयं गतम्, सर्वथाऽपि नाङ्कुरितानि। तदा भ्रष्टप्रतिज्ञः श्रेष्ठिसुतो विलक्षीभूतः, मन्त्री च हृष्टः। तदा स वणिक् गृहं गतः, स्वजनैस्त-द्गृहवृत्तान्तः सर्वोऽपि प्रतिपादितः, शिक्षा चेति दत्ता यत् त्वं राज्ञः पार्श्वात् मासमेकं याचस्व। तेनापि तथैव कृतम्। राज्ञोक्तम्—एवं भवतु। गते मासे तां प्रतिज्ञां स्वीकरिष्ये।

ततः सोऽपि श्रेष्ठिसुतः तद्विप्रमुद्दिश्य चचाल। एकस्मिन् पुरे उपानहौ चर्मकाराय ददे, तदग्रे कथितम्—यद् एतां सज्जीकुरु, त्वां मुदितं करिष्ये। तेन तत् कार्यं कृतम्। स कियन्मात्रं द्रव्यं ददाति स न लाति। अहं शतसहस्रेणाऽपि मुदितो न भवामि। झगटकपतितेन श्रेष्ठिसुतेन व्यमर्शि—दुःखोपरि दुःखम्। परं मम आपच्छेदी स एव विप्र इति ध्यात्वा चर्मकृदग्रे प्रत्यपादि—प्रत्या-गच्छन्नहं त्वां मुदितं करिष्ये इति वदन्नग्रतो गच्छति स्म।

ततः एकः कश्चिद् द्यूतकारस्तमालपति स्म—भो वणिक्! मदीयं वामनेत्रं समर्पय, मया त्वत्पितुर्ग्रहणके मुक्तमभूद् द्रम्म-पञ्चशती गृहीताऽऽसीत् तां गृहीत्वा मम नेत्रं देहि। श्रेष्ठिसुतो-ऽचिन्तयत्—अहो कष्टपरम्परा। अस्याः कथं छुटि क्ष

प्रतीक्षस्व यावत् तं विप्रं मिलित्वाऽऽगच्छामि । इत्युक्त्वा विप्रस्यान्तिके ययौ । तेनापि स्वागतप्रश्नः कृतः । आगमनकारणं निवेदय । श्रेष्ठिजः स्ववृत्तान्तं प्रतिपाद्य सार्थे कृत्वा चचाल ।

तदा कियदध्वनि द्यूतकृत् मिलितः, चक्षुर्याचते । विप्रेणोत्तरं ददे—द्यूतकार ! अस्य पितुर्गृहे ग्रहणानां सहस्राणि सन्ति, न ज्ञायते त्वच्चक्षुः कियत्प्रमाणम्, अतो निजं दक्षिणं नयनं दीयतां यथा तेनानुमानेन तोलयित्वाऽर्प्यते । इत्युक्ते सोऽवादीत्—मेऽनेन लोचनेन स्तम् । चेदिदमपि दीयते तदाऽन्धत्वमेव सम्पद्यते इत्युक्त्वा स निवर्तितः ।

अग्रतो द्वावपि चलितौ । चर्मकृदपि मिलितः । तं प्रति वदति स्म—मां मुदितं कृत्वाऽग्रतो गन्तव्यं त्वया । इति भणति चर्मकारे विप्रो भणति तस्मिन् क्षणे चौरान् मोक्तुं तलारक्षश्चतुष्पथे गच्छन्नस्ति । स तलारो विप्रेण पृष्टः—किमर्थं चौराणां मोचनम् ? तेनोक्तम्—येन राज्ञो गृहे पुत्रो जातोऽस्ति । इति निशम्य तं प्रति विप्रेणोचे—भद्र ! चर्मकार ! अद्य राज्ञः सद्मनि पुत्रो जातोऽस्ति, अतस्त्वं मुदितो जातो न वेति ? चेदित्थं वक्ति न, तदा तलारः कुट्टयति, पश्चात् तेनोक्तम्—मुदितोऽस्मि । तदा पादत्राणमर्पय । गृहीत्वा तत् तत्क्षणमेव क्षेमेण तौ स्वपुरं प्रति चलितौ ।

विप्रेणापि सर्वं तद्गृहवृत्तान्तमापृच्छ्य तद्दिनोपरि सर्वं गृहं द्विभूमिकं नवीनं कारितम् । ततः प्रातः सर्वं वस्तु रत्नादि निष्कास्य तस्याङ्गणे मण्डितम् । साऽपि श्रेष्ठिवधूर्मुदिता कृतस्नानालङ्कारा इतस्ततः परिभ्रमन्ती मन्त्र्यागमनं वाञ्छती विप्रेणोक्ता—

भद्रे ! उपरितनभूमौ गच्छ, ततो दुकूलान्यानीय परिधेहि। इत्युक्त्वा गृहोपरि अध्यारोह्य निःश्रेणी पातिता।

सोऽपि मन्त्री पञ्चकुलसहितः सञ्जातहर्षस्तद्गृहमाजगाम। सर्वतः पश्यति। सा वधूः खुङ्कारेणात्मानं ज्ञापयति स्म। तामुपरि दृष्ट्वा मन्त्रिणा सर्वं मुक्त्वा तां गृहीतुकामेन निःश्रेणी गृहीता। तां निःश्रेणीं स्थापयित्वा यावदारोहति तावता विप्रेण निषेधितः, प्रतिपन्नमेव स्मर। एतामेव निःश्रेणीं लात्वा याहि, यतस्त्वया एषैव गृहीता द्वाभ्यां निजहस्ताभ्याम्। अतः पञ्चकुलैर्निर्भर्त्सितो मन्त्री कृष्णं मुखं लात्वा भूपसमीपं गच्छति स्म।

विप्रो राजानमुवाच—राजन्! अयं मन्त्री अस्य भार्यया सहासक्तोऽस्ति, तेनास्य भार्यासमीपाद् अनेन तद्बीजानि सत्यानि गृहीतानि। राज्ञा इदं स्वरूपं ज्ञात्वा मन्त्रिणं ताडयित्वा तद्बीजान्यानाय्य प्रत्ययश्चक्रे। प्रातरुप्तानि सन्ध्यायां फलानि निष्पन्नानि भुक्तानि च। राज्ञेति प्रत्ययं ज्ञात्वा मन्त्रिणः पार्श्वात् सर्वस्वं गृहीत्वा स्वदेशान्निष्कासितः। स श्रेष्ठिसूनुर्नरेश्वरेण सर्वमन्त्रिषु मान्यतया मुख्यो मन्त्री चक्रे। क्रमेण चतुर्विधं धर्ममाराध्य सुखभाक् समजनि॥

---

## २ कमलश्रेष्ठिकथा (पृ० २४, श्लो० ८४)



नियमनिर्वाहवतां निर्वाणशर्माणि सुलभानि । यतः—

"नाणं नियमग्गहणं, नवकारो नयरुई अ निट्ठा य ।
पंचनयभूसिआणं न दुल्लहा सग्गई होइ ॥ १ ॥"

अपि च—

"अल्पीयानपि नियमः सुखाय सम्यक् प्रपालितो भवति ।
घटकृटट्टयवलोकनरूपः कमलाभिधस्येव ॥ २ ॥"

तथाहि—'श्रीपुरे' नगरे श्रीपतिश्रेष्ठिनः सुन्दरीजातः कमलाभिधानः सुतः । सम्यक्त्वमूलद्वादशव्रतवता पित्रा प्रतिबोधितोऽपि पुत्रो मक्षिका चन्दनमिव धर्मं नैच्छत् । एकदा हि तेन पित्रा तत्रागतानां शीलन्धराचार्याणामभ्यर्णं स नीतः । असत्सम्मुखमेवावलोकनीयमित्यभिधाय धर्मोपदेशदानानन्तरं 'किमप्यवगतम् ?' इति गुरुभिः पृष्टः स प्राह—अष्टोत्तरशतवारं जल्पतां भवतां कण्ठमणिरचलत्, किञ्चौत्सुक्येन स बहुः चलितस्तदहं तु न ज्ञातवान् । इति गुरूणां हास्यं कुर्वन् पित्राऽप्यभयोग्य इत्युपेक्षितः ।

---

१ श्रीहेमविजयगणिविरचिते कथारत्नाकरे तरङ्गेऽष्टमे ८२तमा कथेयं मुद्रिताऽस्ति, किन्तु ग्रन्थान्तराधारेण, न तदाधारेण दीयतेऽत्र ।

२ छाया—

ज्ञानं नियमग्रहणं नमस्कारो नयरुचिश्च निष्ठा च ।
पञ्चनयाकारभूषितानां न दुर्लभा सद्गतिर्भवति ॥

अन्यदा पुनरपि पित्रा तत्रागतानां श्रीगुणसागरगुरूणां समीपे स नीतः, श्रुतपूर्वोदन्तैर्गुरुभिरधस्तादेवात्रलोकनीयमित्यभिधाय धर्मकथाप्रान्ते तथैवोदीरितः सोऽवोचत्—इतो विवरादष्टोत्तरशतं कीटिकाभिर्निर्गतमिति हास्यपरः सोऽन्यश्राद्धैर्हक्कितः।

अन्यदा च तत्रागताः ज्ञानसागरसूरयः पूर्ववृत्तान्तमाकर्ण्य तत्प्रतिबोधाय तमाकारयामासुः। पुरस्तस्थुषि तस्मिन् धर्म कथयद्भिर्गुरुभिः पृष्टः सः— हे कमल! वेत्सि कामभूपस्य सैन्यम्? नेति तेनोक्ते गुरुभिरूचे—

"परिजनपदे भृङ्गश्रेणी पिकाः पटुबन्दिनो
हिमकरसितच्छत्रं मत्तद्विपो मलयानिलः।
कृशतनुधनुर्वल्ली लीलाकटाक्षशरावली
मनसिजमहावीरस्योच्चैर्जयन्ति जगज्जितः॥ ३॥"

इति श्रुत्वा पण्डिता अमी गुरवः इति ध्यायन् स गृहं ययौ।

अथ द्वितीयेऽहनि पुनरप्यनाकारित एव तस्मिन्नागते तथैव गुरुभिरूचे-हे कमल! स्त्रीणां भेदान् जानासि? नेति तेनोक्ते तैरूचे—

"पद्मिनी तदनु चित्रिणी ततः
शङ्खिनी तदनु हस्तिनी तथा।
उत्तमा प्रथमभाषिता ततो
हीयते युवतिरुत्तरोत्तरम्॥ ४॥
कमलमुकुलमृद्वी फुल्लराजीवगन्धिः
सुरतपयसि रम्या सौरभं दिव्यमङ्गे।
चकितमृगदृगाभे प्रान्तरक्ते च नेत्रे
स्तनयुगलमनर्घ्यं श्रीफलश्रीविडम्बि॥ ५॥

अनिभृतसिरसङ्गं दीर्घनिम्नं वहन्ती
स्मरगृहमतिलोम क्षारगन्धिः स्मराम्बुः ॥ १० ॥

सृजति बहुनखाङ्कं संप्रयोगे लघीयः
स्मरसलिलपृपत्का किञ्चिदुत्कम्प्रगात्रा।
न लघु न च बहु स्यात् प्रायशः पित्तला स्यात्
पिशुनमलिनचित्रा 'शङ्खिनी' राजते भोः ॥ ११ ॥"

इति शङ्खिनीस्वरूपम्।

एवं पञ्चमे दिवसे हस्तिनीस्वरूपम्—

"अललितगतिरुच्चैः स्थूलपादाङ्गुलीकं
वहति चरणयुग्मं कन्धरा ह्रस्वपीना।
क्वथितकचकलापा क्रूरचेष्टातिगात्रा
द्विरदमदविगन्धिः स्वाङ्गकेऽनङ्गके च ॥ १२ ॥

द्विगुणकटुकपायप्रायभुग्वीतलज्जा
चलदतिविपुलोष्ठी दुःखसाध्या प्रयोगे।
बहुरपि च विरूक्षात्यन्तमन्तर्विशालं
वहति जघनरन्ध्रं 'हस्तिनी' गद्गदोक्तिः ॥ १३ ॥"

इति हस्तिनीस्वरूपम्।

एवमाकर्णयन् स शास्त्रज्ञा अमी सूरय इति मन्यमानोऽनिशं गृहं ययौ।

एवं षष्ठेऽहनि कासु तिथिष्वेताः पद्मिन्यादयः सेविताः प्रीतिमत्यो भवन्तीति गुरुभिः पृष्टो न जानामी[illegible] साह।

अथ सूरयोऽभ्यधुः—

"नयन२युग४ शर५ र्तु६ ब्रध्न१२ दिग्१० नाग८ सङ्ख्या-
स्तिथय इह रते स्युः प्रीतये चित्रिणीनाम् ।
ग्रह९तिथि१५ भुवना१४ख्या द्वीपयुक्ताः करिण्या-
स्तदितर१-३-११-१३तिथयः स्युः शङ्खिनीनां चतस्रः ॥१४॥"

एतासामेष वश्यविधिः—

"मोर्वाकन्दरसेन जातिफलकं कुर्याद् वशं चित्रिणीं
पक्षौ माक्षिकसंयुतौ च करिणीं पासायतभ्रामरौ ।
शङ्खिन्यामसकृच्च गन्धतगरं मालान्वितं श्रीफलं
ताम्बूलेन सह प्रदत्तमचिरान्मन्त्रैरमीभिः क्रमात् १५"

मन्त्राः स्युर्यथा—ॐ पच पच विहगविहंग कामदेवाय स्वाहा। अनेन मन्त्रेण चित्रिणी। ॐ धिरि धिरि वश्यं कुरु कुरु स्वाहा। अनेन मन्त्रेण हस्तिनी। ॐ हर हर पच पच कामदेवाय स्वाहा। अनेन मन्त्रेण शङ्खिनी।

हे कमल! स्त्रीणामङ्गेषु स्मरावस्थितिं शृणु—

"अङ्गुष्ठे पदगुल्फजानुजघने नाभौ च वक्षःस्तन-
द्वन्द्वे कण्ठकपोलदन्तवसने नेत्रेऽलके मूर्धनि ।
शुक्लाशुक्लविभागतो मृगिदृशामङ्गेष्वनङ्गस्थिति-
मूर्ध्वाधो गमनेन वामपदगा पक्षद्वये लक्षयेत् ॥१६॥"

स्मरस्थाने मर्दिता मृगीलोचनाः सद्यो वश्याः स्युः।

हे कमल! वयोविभागतो बालादिस्त्रीणां वश्यविधिरयमेव—

"'बाला' ताम्बूलमालाफलसरससाहारसन्मानहार्या
'मुग्धा'ऽलङ्कारहारप्रमुखवितरणे रज्यते यौवनस्था।

---

1 हस्तिन्याः।

सद्भावा रम्यगाढोद्भवरतसुखिता 'मध्यमा' त्वेनलक्ष्या
मृद्वालापैः प्रहृष्टा भवति गतवया गौरवेणाऽतिदूरम् १७॥"

हे कमल! रक्तविरक्तस्त्रीलक्षणं शृणु—

"स्त्री कान्तं वीक्ष्य नाभिं प्रकटयति मुहुर्विक्षिपन्ती कटाक्षान्
दोर्मूलं दर्शयन्ती रचयति कुसुमापीडमुत्क्षिप्य पाणिम्।
रोमाञ्चस्वेदजृम्भाः श्रयति कुचतटस्रंसि वस्त्रं विधत्ते
सोत्कण्ठं वक्ति नीविं शिथिलयति दशत्योष्ठमङ्गं भनक्ति १८

नीचैः पश्यति नाभिनन्दति मुहुर्मित्रैः प्रतीकस्थिता
योगे सीदति हृष्यतीह विरहे यात्याननं चुम्बिता।
नास्मादिच्छति मानमीर्ष्यति रते प्रत्युत्तरं नाश्रयेत्
स्पर्शादुद्विजते स्वपित्युपगते शय्यां विरक्ता सती ॥१९॥

आकारैः कतिचिद् गिरा कुटिलया काश्चित् कियत्यः स्मितैः
स्वैरिण्यः प्रथयन्ति मन्मथशरव्यापारवश्यं मनः।
कासाञ्चित् पुनरङ्गकेषु मसृणच्छायेषु गर्भस्थितो
भावः काचघटीषु पुष्करमिव प्रव्यक्त(त्यक्ष)मुत्प्रेक्ष्यते॥२०"

एवमनिशं शृङ्गारसुन्दराणि गुरुवचांसि शृण्वन् कमलो गुरौ रागवानासीत्। मयि भक्तिभागयमिति मत्वा गुरवोऽपि प्रथमं शृङ्गाररसमभिधाय वैराग्यमभ्यधुः। यतः—

"शृङ्गाराङ्गेन यदि नादेपूद्दीपयन्ति विबुधजनाः।
शान्तरसरसवतीयं कथय कथं थाकमायाति ? ॥ २१ ॥"

वैराग्यं यथा—

"भवारण्यभ्राम्यत्तनुगृहमिदं छिद्रबहुलं
वली कालश्चोरो नियतमसिता मोहरजनी।

गृहीत्वा ध्यानाग्निं विरतिफलकं शीलकवचं
समाधानं कृत्वा स्थिरतरदृशो जाग्रत जनाः ! ॥ २२ ॥"

(एवं कदाचिदर्थकथया, कदाचिदिन्द्रजालविनोदेन, कदाचित् प्रहेलिकाभिर्मासोऽत्यगात्।)

अन्यदा ततश्चलनावसरेऽनुयातः स गुरुभिरूचे—हे कमल ! किञ्चित् प्रत्याख्यानं कुरु, हास्यसेविना तेनोचे—

"मर्तव्यं व्रत नेच्छया च वितथं वर्पे द्विपक्षीं विना
वक्ष्ये नाक्षतनालिकेरवदनक्षेपो न कार्यो मया ।
पक्वान्नेषु कवेल्लुकानि मिहिरस्नुह्यादिदुग्धानि च
दुग्धेषु च्छगणं गणीन्द्र ! हरितेष्वाहारणीयं न मे ॥२३॥"

अस्माभिरपि सह हास्यमिति भणितः सोऽभाणीत्—

"गुरुणाऽपि समं हास्यं, कर्तव्यं कुटिलं विना ।
परिहासविहीनस्य, जन्तोर्जन्म निरर्थकम् ॥ २४ ॥"

पुनर्गुरुणा भणितः सोऽव्रोचत्—मद्गृहपुरो वसतः सीमाह्वस्य कुम्भकारस्य टल्लिकामवलोक्य भोक्ष्ये इति प्रत्याख्यानमङ्गीकुर्वन्नस्मि इति तेनोक्ते लाभालाभज्ञा गुरवः 'एवं भूयाद्' इत्यभिधायाऽन्यत्र विहरन्ति स्म । सोऽपि प्रतिदिनं गृहमागच्छन् पुरःस्थितस्य तस्य टल्लिकां प्रयासं विना विलोक्य भुञ्जानस्तं नियममपालयत् ।

एकदा स कुलालो मृत्तिकामादातुं खानौ गतः, तदा गृहमागच्छता तेन तस्य टल्लिकामविलोक्यैव भोक्तुमुपाविशता स्मृतनिजनियमेन माताऽभाणि—हे मातः ! मयाऽद्य टल्लिका विलोकिता नास्ति, तेनैतत् कृत्यं कृत्वा भोक्ष्ये । इत्यभिधाय कुलालस्य

च शुद्धिं विधाय स तस्यां खानौ ययौ। तदा च स कुलालस्तत्र स्वर्णमाणिक्यभृतामेकां कटाहिकां लब्ध्वा इतस्ततो गोपयन्नभूत्। सोऽपि तस्य टल्लिकामेव दूरतोऽवलोक्य दृष्टा दृष्टेति च भणन् चलमानस्तेनाभाणि—रे भद्र! समागच्छ, अर्धं तव अर्धं मम इति तद्वचनमाकर्ण्य वलितः, स तदर्धभागेन बहुस्वर्णमणिधनं लात्वा गृहं गतः। अहो धन्यं जिनशासनं यत्रेदं स्तोकमपि प्रत्याख्यानं बहुफलदं जातमिति चिन्तयन् सोऽन्यदा तत्रागतानां तेषामेव गुरूणामभ्यर्णे श्रावकोऽभूत्। क्रमेण निरतिचारं श्रावकधर्ममाराध्य स द्वादशे कल्पे सुरः समजनि ॥



# ८ कथानकम् (पृ० २६, श्लो० ८९)



"केनापि सार्धं मेधावी, विरोधं विदधीत न ।
यतः शुकशकुन्तेन, यथा वेश्या विडम्बिता ॥ १ ॥"

'रत्न'पुरे पद्मरमारमणीयो रत्नसाराभिधः श्रेष्ठी । तस्य केदारकस्तनुः पठितविद्यो व्यवसायाध्यवसायी कृतपाणिग्रहणो विचरति सुखम् । तस्य च श्रेष्ठिनः पुराणस्मृतिकथाख्यानाख्यायिकाविचक्षणः कलाकलापो नाम शुकः ।

कियत्कालेन रुजार्तो मुमूर्षुः स श्रेष्ठी सुतं साक्षसमुक्तवान्—वत्स ! वयं मरणाभिमुखाः, त्वं तु नवयौवनः, यौवने च विषयविषमविषघूर्णमानदृष्टयो न किञ्चित् पश्यन्ति नराः । सद्गुरूपदेशामृतसेसिच्यमानात्मानस्तु पुरुषा न बाध(बाध्य ?)न्ते तेन विषेण । ततः सङ्गृहाण सदुपदेशामृतम् । स चायं सदुपदेशः—

'अज्ञातेषु न विश्वसनीयम्, नारीषु मन्त्रो न प्रकटनीयः, मूलानुपालनेन धनं व्ययनीयम्, विरोधः प्रोन्मूलनीयः, महाजनो रञ्जनीयः, गुरवो न खेदनीयाः, आवश्यके कर्मणि न प्रमादः करणीयः, सूक्तमुक्तं रिपोरपि न दूषणीयम्, कस्यापि न च्छेदनीया कथा, चाटुकारेषु न प्रत्ययनीयम्, वेश्याः पराङ्गनाश्च वर्ज्याः, धनं भार्यापुत्राधीनं न विधानीयम्, कष्टेऽपि पुरुषव्रतं न त्यजनीयम्, अदानतपस्कं दिनं नातिवाहनीयम्' इत्यादि । केदारकोऽपि 'तथा' इति प्रतिपेदे । श्रेष्ठिना शुकः समीपमानीय प्रोक्तः—शुक ! त्वयाऽयं मत्पुत्रः कुव्यापारे प्रवर्त-

१ विनोदकथासङ्ग्रहे ५८ तमी कथा, इयं तदाधारेण दीयतेऽत्र ।

मानो निषेध्यः। पुत्रं पुनः प्रोवाच—त्वयाऽप्यस्य शुकस्य वाक्यमनास्थया न श्रव्यम्, किन्तु तत्त्वधिया। पुत्रोऽपि तथाऽऽदद्रे। मृतः श्रेष्ठी। गतानि वर्षाणि द्वित्राणि।

अथ केदारो नगरान्तश्चरन् कामपताकाख्यां प्रौढवेश्यां दृष्ट्वा तदासक्तो जातः। तत्रैव तिष्ठति प्रायः। यदा तु गृहमेति तदा शुक उपालभते—त्वं क स्थित इयत्कालम्? मा स्म विस्मार्षीस्तानि पितुर्व्याहृतानि। केदारकस्तूष्णीमास्ते। लब्धे च प्रसरे वेश्यायाः किङ्करी केदारस्य गृहमेति। वसु-कनकादि याचते, स्वैरं लभते। शुकस्तु तस्याः शृण्वत्या एव लालपीति—अहो श्रेष्ठिन्! कथं गृहं मोषयसि? धिक् त्वाम् इत्यादि। किङ्कर्यपि स्वामिन्यै व्यपप्रथत्। तत्र मन्त्रो जातः—शुकोऽयमानीय हन्यताम्, य एवमस्माभिर्भक्ष्यं श्रेष्ठिनं तथा तथा रिरक्षिषति।

एकदा श्रेष्ठिनि गृहस्थे भुञ्जाने शुकेऽपि दाडिमीफलशर्करादिलवशालिकणास्वादव्यग्रे वेश्याकर्मकरी समेत्य यत्तत्कार्यं प्रोच्य 'अहो कीदृक् शुको रमणीयः?' इति स्तुतिमिषं कृत्वा हस्ते गृहीत्वा गतैव स्वामिन्यग्रे तं मुमोच। साऽपि तमाह—रे निर्दय! श्रेष्ठिना क्रियमाणामस्मद्वृद्धिं छिनत्सि, तस्मादनुभव चापल्यस्यास्य फलमिति गदित्वा पक्षावुदच्छिनत्। कृतो मांसपिण्डप्रायः। यावल्लोहं तीक्ष्णमादाय किल तं छेत्स्यति, लोहं च गृहीतुं गता तावदसौ शनैः शनैः कृतरिङ्खणो रसवतीसदनैकदेशस्थाऽन्नत्यागस्थानं सरसं प्राप्तः। वेश्यया तु लोहमादायाऽऽजग्मुष्या शुको न दृष्टः, 'उन्नीतं यथा शकुनिकया सरसमांसलोभेन गृहीतः, किं तेन?' इति गवेषणनिरभियोगा तस्थौ।

शुकेन्द्रोऽपि तस्यास्तत्परिवारस्य च दृष्टिं परिहरन् क्वान्ते धान्यकणानुपजीवंस्तद्देशे च वसन् क्रमाद्रूढपक्षः संवृत्तः पुष्टाङ्गः पूर्ववत्। ततस्तादृग्वैरनिर्यातनार्थी निशि उड्डीय तत्र गोविन्दभवने प्राप्तः, यत्र सा गणिका भक्तमना नित्यं नित्यमेति। प्रभूतपुष्पपूजितस्य हरेरङ्कैकदेशे पुष्पपिहितस्तस्थौ।

सार्धप्रहरमात्रे गतेऽहनि समागता सा गणिका, ननाम च महाभक्त्या हरिम्। अत्रान्तरे कालज्ञः शुकः प्रोल्ललाप प्रौढस्वरम्—भद्रे! तव भक्त्या तुष्टोऽस्मि विष्णुरहम्, त्वां वैकुण्ठभवनं नाम प्रसिद्धं स्वभवनं विमानेन नेष्यामि, माऽत्र भ्रान्तिं कार्षीः। एवं शुकोक्तमपि शुकादर्शनात् सा मुकुन्दगदितमिति प्रतीयाय। ततः सञ्जातपुलका प्राह-भगवन्! मत्प्रसादो मय्ययम्, किमन्यद् गवेष्यते? कथय कदा तत्र नेष्यसि? किं चाहं दानपुण्यादिकं करोमि? इत्युक्ते पुनः प्राह— भद्रे! आसन्नायामस्यामेव दशम्यां सर्वस्वं दत्त्वा, गृहं च पात्रशः कृत्वा परिवारमपि विसृज्य मुण्डितमुण्डा कज्जलकरम्बितमुखी दण्डिखण्डितनिवसना सपौरजनपदा मद्गृहाङ्गणमापतेः मध्याह्ने। शुक एकः समीपस्थं रसालमारूढो दर्शिष्यते तेनाभिज्ञानेन श्रद्धातव्यं यथा किङ्किणीरणरणायमानं सकृष्णं विमानमप्येष्यति इति। एवमुक्ते प्रत्येति स्म सा। गच्छति स्म सदनम्, चकार सर्वं तदुपदिष्टम्। धूर्तैर्लोभिष्ठो बाध्यते। आगता सा दशमी। कृता सा सामग्री। मेलितो महाजनः। आगता पूर्वोक्तसमाचरणपरा पण्यस्त्री। प्रसृता देशेऽपि वार्ता। यावत् संवृत्ते द्विप्रहरी। अत्रान्तरे समागतः स शुको माकन्दशाखायाम्। ददर्श च तं लोकः, उवाच च—'लिङ्गदर्श-

नाह्लिङ्ग्यनुमीयते। यावदतिक्रान्ता त्रिप्रहरी। न चायाति विमानम्। उत्पश्यो लोकः सा च। एवं सति शुकः समेत्य बभाण—'रे राक्षसि! क कृष्णः? क विमानम्? क चास्यास्तवेदृशी पात्रता? केवलमेतद्धि—

"कृतं प्रतिकृतं कुर्याद्, हिंसिते प्रतिहिंसनम्।
त्वया लुञ्चापितौ पक्षौ, मया मुण्डापितं शिरः॥ १॥"

लोकैः पृष्टम्—किमेतत्? शुकेनोक्ता सा कथा प्रपञ्च्य। जहास लोकः। सा तु मम्लौ। गताः सर्वे स्वस्थानम्॥



## ५ दाम्भिककुलानन्दकथा ( पृ० ५७ श्लो० १७२ )



'देव'पुरे कुलानन्दः श्रेष्ठी, मदनकलिका पत्नी, पुत्रो नास्ति। अतस्तन्नगरकृताधिष्ठानायाः सप्रभावाया देव्याश्चामुण्डायाः कृतमुपयाचितं श्रेष्ठिन्या—यदि मे त्वत्प्रसादात् पुत्रो भावी तदा लक्षत्रयमर्घ्यां पूजां करिष्यामि इति।

जातः क्रमेण पुत्रः। भर्त्रे कथितं तदुपयाचितम्। तेनापि 'युक्तम्' इति भणता लक्षेण लक्षेण निष्पन्नं पुष्पत्रयं हैमं सरत्नं घटितम्। सपरिजनेन गत्वा पूजापूर्वं तत् पुष्पत्रयं देव्या भाले भुजयोश्च किल पूजार्थं न्यस्तम्। श्रेष्ठिना स्वस्य पत्न्याः शिरोवशेषापदं गृहीतम्। यथास्थानं च जग्मे शठमौलिमौलिना।

देवी विलक्षा सती सहियडनाम्नो मित्रदेवस्याग्रे मनोदुःखं निवेदयितुं गता, न्यवेदयच्च यथा—देव! कुलानन्दवणिजाऽहमेवं पुष्पाणामर्पणेन युक्तिपूर्वकं ग्रहणेन च वञ्चिता, किं करोमि? इति। सहियडोऽपि सदुःखं जगौ। त्वं सुखं समर्थ छुटिताऽसि, शृणु, यथाऽहमनेन कदर्थितोऽस्मि। पूर्वमस्य वाहनमन्तर्वार्धि प्रवासितं गतम्। क्वापि नामाऽपि न श्रूयते। ततोऽसौ मामेत्य 'महिषं ते दास्यामि, यदि वाहनं मे समागम्यात्' इति प्रत्यपादि। आनीतं च तत् मया स्वशक्त्या। आययुर्वार्धापनिकाः उत्सवोऽस्य गृहे। यावत् प्राप्तं क्षेमेण वहित्रम्। विक्रीतं वस्तु, लाभोऽप्यमेयः। मया याचितोऽसौ स्वप्ने। सोऽपि तरुणमहिष-

---

१ विनोदकथासङ्ग्रहे २५मा कथा मुद्रिता। तदाधारेण दीयतेऽत्र।

मानीय तद्गलरज्जुं मम गले बबन्ध। वादित्राणि भेरी-भुङ्गल-मृदङ्गादीनि युगपत् वादयामास। त्रस्तो महिषः, चिरमरण्यवास्तव्यपरत्वात्। मां स्वेन सह रज्जुना घर्षणाच्चकर्ष यमवाहनः। ममाङ्गे चन्द्रिका जाताः ताः किलाद्यापि न शान्तिमायान्ति। निःशूके च नाहमपि प्रभवामि। तस्मात् त्वं मा स्म रुदः, महद् भाग्यं ते। नाद्यापि किमपि विनष्टम्। याहि स्वगृहम्। किं नाश्रौषीः ?—

"कोऽर्थान् प्राप्य न गर्वितो ? विषयिणः कस्यापदोऽस्तं गताः ?
स्त्रीभिः कस्य न खण्डितं भुवि मनः ? को नाम राज्ञां प्रियः ?।
कः कालस्य न गोचरान्तरगतः ? कोऽर्थी गतो गौरवं ?
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ? १॥"

इत्यादि। गता देवी।



# प्रियङ्करनृपकथान्तर्गतपद्यानां वर्णानुक्रमणी



* एतच्चिह्नाङ्किते पद्यप्रतीके श्लोकाङ्कस्थाने टिप्पण्यङ्को ज्ञेयः ।

| पद्यप्रतीकम् | श्लोकाङ्कः | पृष्ठाङ्कः |
|---|---|---|
| **ष ( १ )** | | |
| २७१ षट्कर्णो भिद्यते मन्त्रः | १२६ | ३९ |
| **स ( २६ )** | | |
| २७२ संसारभारखिन्नानां | ३६ | १० |
| २७३ सदा शुभध्यान१मसारलक्ष्मी० | २४७ | ८० |
| २७४ सप्ततिशतं जिनानां | २५७ | ८५ |
| २७५ सम्पदो विपदः स्थाने | १३५ | ४२ |
| २७६ सफलं जीवितं नोऽद्य | २६६ | ८८ |
| २७७ समधातोः प्रशान्तस्य | १४८ | ४६ |
| २७८ समागच्छ समागच्छ | २६५ | ८८ |
| २७९* सरांसि तरुभिर्गेहं | ४ | २७ |
| २८० सर्वोपसर्गहरणं स्तवनं पुमान् यो | ११२ | ३४ |
| २८१ सलिलानलविषविषधर० | २५२ | ८१ |
| २८२ सश्रीकं वसुधाधारं | १९६ | ६३ |
| २८३ सहकारश्च सुजातं | २८२ | ९५ |
| २८४ सहसा विदधीत न क्रिया० | २१३ | ६९ |
| २८५ सिंहासणे निसन्नं ( प्रा० ) | १०१ | ३१ |
| २८६ सुकुलजन्म विभूतिरनेकधा | ९५ | ३० |
| २८७ सुकृतं धनस्य बीजं | २३१ | ७७ |
| २८८ सुगुणमपगुणं वा | २१४ | ६९ |
| २८९ सुण रे पासा ! मुझ वचनविलासा ( गू० ) | १२० | ३७ |
| २९० सुद्धेणं चेव देहेणं ( प्रा० ) | ८२ | २४ |
| २९१ सुभोजनं दिने सारं | २३३ | ७७ |

॥ ॐ नमः सिद्धम् ॥

अनेकमन्त्रगर्भितं परमप्रभावकं

# ॥ उवसग्गहरं श्रीपार्श्वनाथस्तोत्रम् ॥



उवसग्गहरं पासं पासं वंदामि कम्मघणमुक्कं ।
विसहरविसनिन्नासं मंगलकल्लाणआवासं ॥ १ ॥
विसहरफुलिंगमंतं कंठे धारेइ जो सया मणुओ ।
तस्स गह-रोग-मारी—दुट्ठजरा जंति उवसामं ॥ २ ॥
चिट्ठउ दूरे मंतो तुज्झ पणामो वि बहुफलो होइ ।
नर-तिरिएसु वि जीवा पावंति न दुक्खदोगच्चं ॥३॥
ॐ अमरतरु-कामधेणु-चिंतामणिकामकुंभमाइया ।
सिरिपासनाहसेवाग्गहाण सव्वे वि दासत्तं ॥ ४ ॥
ॐ ह्रीँ श्रीँ ऐँ ॐ तुह दंसणेण सामिय !
पणासेइ रोग-सोग-दोहग्गं ।
कप्पतरुमिव जायइ
ॐ तुह दंसणेण सव्वफलहेऊ स्वाहा ॥ ५ ॥

ॐ ह्रीँ नमिऊण [1]विग्घणासय
मायाबीएण धरणनागिंदं ।
सिरिकामराजकलियं पासजिणंदं नमंसामि ॥ ६ ॥
ॐ [2]ह्रीँ सिरिपासविसहरविज्जामंतेण झाण [3]ज्झाएज्जा
धरण-पउमावइदेवी ॐ ह्रीँ क्ष्म्ल्व्र्यूँ स्वाहा ॥७॥
ॐ जयउ [4]धरणिंदपउमावईय नागिणी विज्जा ।
विमलज्झाणसहिओ ॐ ह्रीँ क्ष्म्ल्व्र्यूँ स्वाहा ॥८॥
ॐ थुणामि पासनाहं ॐ ह्रीँ पणमामि परमभत्तीए ।
अट्ठक्खर[5]धरणेंदो पउमावइ पयडिया कित्ती ॥ ९ ॥
जस्स पय[6]कमलमज्झे सया वसइ पउमावई य
धरणिंदो ।
तस्स नामेण सयलं विसहराविसं नासेइ ॥ १० ॥
तुह सम्मत्ते लद्धे चिंतामणिकप्पपायवब्भहिए ।
पावंति अविग्घेणं जीवा अयरामरं ठाणं ॥ ११ ॥

---

१ विप्पणासय, २ क्ष्रीं, ३ झाअव्वो, ४ घरणदेवपढमहुत्ती, ५ धरणिंदपउ०, ६ कमले सया इति १९८०तमे वैक्रमीयाब्दे श्रीजैननवयुवकमित्रमण्डलेन प्रसिद्धिं नीतस्य श्रीपञ्चप्रतिक्रमणमूलसूत्रस्याधारेण पाठान्तराणि ।

ॐ नट्ठट्ठमयट्ठाणे पणट्ठकम्मट्ठनट्ठसंसारे ।
परमट्ठनिट्ठिअट्ठे अट्ठगुणाधीसरं वंदे ॥ १२ ॥

इअ संथुओ महायस ! भत्तिब्भरनिब्भरेण हियएण ।
ता देव ! दिज्ज बोहिं भवे भवे पास ! जिणचंद ! ॥१३॥

तुह नामसुद्धमंतं[1] सम्मं जो जवइ सुद्धभावेण ।
सो अयरामर ठाणं पावइ[2] न य दोग्गइ दुक्खं ॥ १४ ॥

ॐ पंडुभगंदरदाहं कासं सासं च सूलमाईणि ।
पासपहुपभावेणं नासंति सयलरोगाइं ॥ १५ ॥[3]

ॐ विसहर दावानल साइणि वेयाल मारि आयंका ।
सिरिनीलकंठपासस्स समरणमित्तेण नासंति ॥१६॥[4]

पन्नासं गोपीडां कूरग्गहदंसणं भयं काये ।
आवी(वि) न हुंति एए तहवि तिसंझं गुणिज्जासु १७[5]

पि(पी)डजंतभगंदरखाससासमूलतह(निव्वा)ह ।
श्री(सिरी)सामलपासमहंत नाम पऊर पऊलेण॥१८॥

ॐ ह्रीँ श्रीपासधरणसंजुत्तं
विसहरविज्जं जवेइ सुद्धमणेणं

---

१ सुद्धे मंते जो नर जपंति सुद्धभावस्स, २ पावति नयगयसुक्खं इति पाठान्तरे ।
३–४–५ एतद् गाथात्रयं नास्ति प्रत्यन्तरे ।

पावेई इच्छियसुहं

ॐ ह्रीँ श्रीँ क्ष्म्ल्व्र्युँ स्वाहा ॥ १९ ॥[1]

रोगजलजलणविसहरचोरारिमइंदगयरणभयाइं ।

पासजिणनामसंकित्तणेण पसमंति सव्वाइं ॥ २० ॥



---

१ अतः परं गाथा इमाः—

"तं नमह पासनाहं, धरणिंदनमंसियं दुहं पणासेइ ।
तस्स पभावेण सया, नासंति सयलदुरियाइं ॥ १८ ॥
एए समरंताणं, मणेणि न दुहं वाही नासमाहिदुक्खं ।
नामं चिय मंतसमं, पयडो नत्थित्थ संदेहो ॥ १९ ॥
जलजलण तह सप्पसीहो, चोरारी संभवे वि खिप्पं ।
जो समरेइ पासपहु, पहवइ न कया वि किंचि तस्स ॥ २० ॥
इहलोगट्ठी परलोगट्ठी जो समरेइ पासनाहं तु ।
तत्तो सिज्झेइ न, कोसइ (संति) नाह सुरा भगवंतं ॥ २१ ॥"

श्रीतेजःसागरप्रणीतं

# श्रीउपसर्गहरस्तोत्रपादपूर्तिरूपं

## ॥ श्रीपार्श्वस्तोत्रम् ॥

श्रीगुरुभ्यो नमः ।

**उवसग्गहरं पासं, वंदिअ नंदिअ गुणाण आवासं ।**
**मइसुरसूरिं सूरिं, थोसं दोसं विमुत्तूणं ॥ १ ॥**

[ उपसर्गहरं पार्श्वं वन्दित्वा नन्दित्वा गुणानामावासम् ।
मतिसुरसूरिं सूरिं स्तोष्ये दोषं विमुच्य ॥]

**जह महमहिममहग्घं, पासं वंदामि कम्मघणमुक्कं ।**
**तह मह गुरुकमजुअलं, थोसामि सुसामि भिच्चुव्व ॥२॥**

[ यथा महोमहिममहार्घं पार्श्वं वन्दे कर्मघनमुक्तम् ।
तथा मम गुरुक्रमयुगलं स्तोष्यामि सुस्वामिनं भृत्य इव ॥]

**संसारसारभूअं, कामं नामं धरंति निअहिअए ।**
**विसहरविसनिन्नासं, धन्ना पुन्ना लहंति सुहं ॥ ३ ॥**

[ संसारसारभूतं कामं नाम धरन्ति निजहृदये ।
विषहरविषनिर्णाशं धन्याः पुण्या लभन्ते सुखम् ॥]

**सारयससिसंकासं, वयणं नयणुप्पलेहिं वरभासं ।**
**कुणइ कुकम्मविणासं मंगलकल्लाण आवासं ॥ ४ ॥**
**विसहरफुलिंगमंतं कुग्गहगहगाहिअविहिअपुव्वत्तं ।**
**कुवलयकुवलयकंतं, मुहं सुहं दिसउ अच्चंतं ॥५॥–जुअलं**

[ शारदशशिसङ्काशं वदनं नयनोत्पलाभ्यां वरभासम् ।
करोति कुकर्मविनाशं मङ्गलकल्याणावासम् ॥

विषधरस्फुलिङ्गमन्त्रं कुग्रहग्रहगृहीतविहितपूर्वत्वम् ।
कुवलयकुवलयकान्तं सुखं सुखं दिशतु अत्यन्तम् ॥ ]
गुरुगुरुगुणमणिमालं, कंठे धारेइ जो सया मणुओ ।
सो सुहगो दुहगो णो, सिवं वरइ हरइ दुहदाहं ॥६॥
[ गुरुगुरुगुणमणिमालां कण्ठे धारयति यः सदा मनुजः ।
स शुभगो दुर्भगो न शिवं वृणोति हरति दुःखदाहम् ॥ ]
गुरुपायं गुरुपायं, गयरायगइं हु नमइ गयरायं ।
तस्स गहरोगमारी–सुदुट्ठकुट्ठा न पहवंति ॥ ७ ॥
[ गुरूपायं गुरुपादं गजराजगतिं खलु नमति गतरागम् ।
तस्य ग्रहरोगमारि–सुदुष्टकुष्ठा न प्रभवन्ति ॥ ]
भूवालभालमउड–ट्ठिअमणिमालामऊहसुइपायं ।
जो नमइ तस्स निच्चं, दुट्ठजरा जंति उवसामं ॥ ८ ॥
[ भूपालभालमुकुटस्थितमणिमालामयूखशुचिपादम् ।
यो नमति तस्य नित्यं दुष्टज्वरा यान्त्युपशामम् ॥ ]
चिट्ठउ दूरे मंतो, तुह संतो मज्झ तुज्झ भत्तीए ।
सव्वमपुव्वं सिज्झइ, झिज्झइ पावं भवारावं ॥ ९ ॥
[ तिष्ठतु दूरे मन्त्रस्तव सन् मम तव भक्त्या ।
सर्वमपूर्वं सिध्यति क्षीयते पापं भवारावम् ॥ ]
अहवा दूरे भत्ती, तुज्झ पणामो वि बहुफलो होइ ।
संसारपारकरणे, सुजाणवत्तु(त्तं) व्व जाणाहि ॥ १० ॥
[ अथवा दूरे भक्तिस्तव प्रणामोऽपि बहुफलो भवति ।
संसारपारकरणे सुयानपात्रमिव जानीहि ॥ ]
दंसणदंसणदं तव, दंसणयं लद्धु(द्धूण) सुद्धबुद्धीए ।
नरतिरिएसु वि जीवा, गमणं भमणं व(च) नलहंति ॥११॥

[ दर्शनदर्शनदं तव दर्शनकं लब्ध्वा शुद्धबुद्ध्या ।
नरतिर्यक्षु अपि जीवा गमनं भ्रमणं च न लभन्ते ॥ ]
गुरुमाणं गुरुमाणं गुरुमाणं जे हु दिंति सुगुरूणं ।
ते दुहभवणे भवणे पावंति न दुक्खदोगच्चं ॥ १२ ॥
[ गुरुमेभ्यो गुरुमेभ्यो गुरुमानं ये खलु ददति सुगुरुभ्यः ।
ते दुःखभवने भवने प्राप्नुवन्ति न दुःखदौर्गत्ये ॥ ]
तुह सम्मत्ते लद्धे, लद्धं सिद्धीइ सुद्धमुद्धा णं ।
रयणे रयणे पत्ते, जह सुलहा रिद्धिसंपत्ती ॥ १३ ॥
[ तव सम्यक्त्वे लब्धे लब्धः सिद्धेः शुद्धमूर्धा ननु ।
रत्ने रत्ने प्राप्ते यथा सुलभा ऋद्धिसम्प्राप्तिः ॥ ]
सुहवरणे तुह चरणे, चिंतामणिकप्पपायवब्भहिए ।
लद्धे सिद्धिसमिद्धे, लद्धमसुद्धं तिजयसारं ॥ १४ ॥
[ शुभवरणे तव चरणे चिन्तामणिकल्पपादपाभ्यधिके ।
लब्धे सिद्धिसमृद्धे लब्धमसुग्धं त्रिजगत्सारम् ॥ ]
सामी ! कामियदायं, नच्चा सुच्चा जिआ तुमं पत्ता ।
पावंति अविग्घेणं, सिग्घमहग्घं कुसलवग्गं ॥ १५ ॥
[ स्वामिन् ! कामितदायं(तारं) नत्वा श्रुत्वा जीवास्त्वां प्राप्ताः ।
प्राप्नुवन्ति अविघ्नेन शीघ्रमहार्घं कुशलवर्गम् ॥ ]
तिव्वायरेण भव्वा, तुह मुहकमलाउलेहि असम्मत्ता ।
पावंति पापहीणा, जीवा अयरामरं ठाणं ॥ १६ ॥
[ तीव्रादरेण भव्यास्तव मुखकमलाकुलैरसमाप्ताः (?) ।
प्राप्नुवन्ति पापहीना जीवा अजरामरं स्थानम् ॥ ]
इय संथुओ महायस !, नियजसकरपयरपाविअसुसोम ! ।
नियमइणो अणुसारा, सारगुणा ते सरंतण ॥ १७ ॥

तुह सुहपयगयचित्तेण, भत्तिब्भरनिब्भरेण हिअयेण।
अह देहि मे हिअकरं, सुचरणसरणं निरावरणं ॥१८॥
—शुभम्

[ इति संस्तुतो महायशो ! निजयशस्करभक्तभासशुभाम ॥
निजमतेरनुसारात् सारगुणांस्ते स्मरता ॥
तव शुभपदगतचित्तेन भक्तिभरनिर्भरेण हृदयेन ।
अथ देहि मे हितकरं सुचरणशरणं निरावरणम् ॥ ]

चउरम्मधम्मदेसण—सुणणे सुणणे वि दुलहं सम्मत्तो।
ता देव ! दिज्ज बोहिं, सोहिं को हिंडइ भवंमि ? ॥१९॥

[ चतुरम्यधर्मदेशनश्रवणे स्तवनेऽपि दुर्लभं सम्यक्त्वम् ।
तद् देव ! देया बोधिं शुद्धिं को हिण्डति भवे ? ॥ ]

एवं सेवंतेणं, तुह सुहगुणकित्तणं मए विहिअं।
ता देसु मे सुकुसलं, भवे भवे पास ! जिणचंद ! ॥२०॥

[ एवं सेवमानेन तव शुभगुणकीर्तनं मया विहितम् ।
तद् ददस्व मे सुकुशलं भवे भवे पार्श्व ! जिनचन्द्र ! ॥ ]

इअ सुओ सुहओ गुणसंजुओ
सासिगणंबरसुंदरतावणो ।
स उवसग्गहरस्स दलेहि सो
दिसउ तेअसुसायरसंपयं॥२१॥-द्रुतविलम्बितम्

[ इति स्तुतः सुखदो गुणसंयुतः
शशिगणाम्बरसुन्दरतापनः ।
सन् उपसर्गहरस्य दलैः स
दिशतु तेजःसुसागरः सम्पदम् ॥ ]

---

## प्रियङ्करकथान्तर्गतविशिष्टनगनगरनरादीनामकारा-द्यनुक्रमः

# AN OPINION

BY

**Dr. Johannes Hertel,**

*Professor of Sanskrit in the University of Leipzig.*

"As to Priyankara-nṛpa-katha, no introduction to it can possibly be written without the rest of the text. The story is interesting, not only from the view of Jain religion, but also from that of folk-lore, and that of language, as it contains many stanzas not only in Prakrit, but in old Gujarati as well. When finished, I therefore should like to use it as a text-book with some of my pupils who are interested in narrative literature."

[ Vide his letter, dated the 23rd August 1927 ]